# UNIVERSITY REVIEW

JOURNAL OF THE UNIVERSITY OF JAMMU

1973

## KALIDASA SPECIAL NUMBER

Published by

POST-GRADUATE DEPARTMENT OF SANSKRIT,

JAMMU UNIVERSITY, JAMMU TAWI.

# यूनिवर्स्टी रिव्यू

जम्मूविश्वविद्यालयः जम्मू तवी

१९७३

# कालिदासविशेषाङ्कः

स्नातकोत्तरसंस्कृतविभागेन प्रकाशितः

संरक्षक
डा० जानकीनाथभान उपकुलपति

सम्पादिका
डा० वेदकुमारी

परामर्शसमिति
श्री रामनाथ शास्त्री
श्री शम्भुनाथ शर्मा
डा० कौशल्यावल्ली
डा० रामप्रताप

प्रकाशक
जम्मू विश्वविद्यालय, जम्मू

मुद्रक
स्पेसएज प्रिण्टर्ज़
म्युनिसिपल मार्किट महेशी गेट जम्मू।

# विषयानुक्रम

## सम्पादकीय

स्वदेश तथा विदेश के अनेक मनीषियों ने महाकवि कालिदास के काव्योदधि का मन्थन करके प्रचुर मात्रा में मुक्ताफल प्राप्त किये हैं परन्तु आज भी जब कोई काव्यरसिक इस साहित्यरत्नाकर में गोता लगाता है तो बहुत सी मुक्तामणियां अनायास निकल आती हैं जो कभी तो हमारी कला को आलोकित करती हैं और कभी आध्यात्सिक संस्कृति की झलक दिखाती हैं। इनके झिलमिलाते आलोक में स्पन्दित अनेक कविहृदय समय समय पर काव्यरस बरसाकर सहृदयों की भावभूमि को सींचते रहे हैं।

महाकवि कालिदास की रचनायें देशकाल की सीमाओं को लांघकर अतीत और आगत को एक सूत्र में पिरोती हुई सदैव आनन्द एवं प्रेरणा का अजस्र स्रोत रही हैं। 'यस्यागम: केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति' तथा 'न रूपं पापवृत्तये' के उद्घोष आज भी शिक्षाशास्त्रियों और कलाप्रेमियों को चेतावनी देते हुए उन्हें शिक्षा और कला के महान् उद्देश्यों के प्रति जागरूक रखते हैं।

जम्मू विश्वविद्यालय के स्नातकोत्तर विभाग की ओर से यह भावाञ्जलि महाकवि कालिदास के पाठकों को समर्पित है। समयाभाव तथा स्थानाभाव के कारण कुछ लेखों का सार मात्र ही प्रस्तुत किया जा सका है। एतदर्थ विद्वान् लेखकों से क्षमाप्रार्थना है।

जम्मू विश्वविद्यालय के उपकुलपति डा० जानकीनाथ भान के हम बड़े आभारी हैं। उन्हीं की सत्प्रेरणा से यह विशेषाङ्क प्रकाश में आ सका है। हमें पूर्ण आशा एवं विश्वास है कि वह भविष्य में भी इसी प्रकार अपने आशीर्वाद से उत्साहित करते रहेंगे। यूनिवर्स्टी रिव्यू के प्रधान सम्पादक श्री जे० एन० कौल तथा स्पेसएज प्रिन्टर्ज के श्री रविदेव शर्मा के सहयोग के लिए उन्हें हमारा धन्यवाद है।



# कालिदासस्य कृतिषु प्रतिकर्मसामग्री

डा० वेदकुमारी जम्मूविश्वविद्यालयः

किमपि सुन्दरं वस्तु विलोक्य मानवस्तत्प्रति समाकृष्टचेताः सञ्जायते। तस्यैषा नैसर्गिकी प्रवृत्तिः सर्वत्रैवावलोक्यते। पूर्वं तावदसौ जीवनधारणोपयोगिवस्तूनां सम्प्राप्त्यै प्रयतते, सम्प्राप्य च तानि संचिनोति, अनन्तरमसौ स्वीयं शरीरं दैनिकजीवनोपयोगि समस्तमेव वस्तुजातं च समलङ्कर्तुं चेष्टते। एवंविधो व्यापारः सृष्टेरादिकालादारभ्येदानीं यावत् वरीवर्त्ति। प्रतिदिनं स आत्मानं ललिताल्ललिततरं रम्याच् च रम्यतरं विधातुं नवनवान् अलङ्कारान् प्रकृष्टानि च प्रसाधनानि अन्वेषयति प्रयुङ्क्ते च। कदाचिदसौ कोमलकिसलयैः कायं कान्तं कलयति कदाचिद् विभिन्नवर्णैः पक्षिपक्षैर्निजं देहं भूषयति। कदाचिदसौ मृत्काचमणिखण्डैरात्मानमलङ्करोति कदाचिच्च केवलमस्थिशकलैर्मण्डयति। इदमेव कर्म प्रतिकर्म वा प्रसाधनं वेत्यभिधीयते।

यथा यथा संसारेऽस्मिन् सभ्यता विकासमाप तथा तथा वस्त्राण्यलंकरणानि तैलाङ्गरागप्रभृतीनि प्रसाधनसाधनान्यपि वर्वधिरे। भारते वर्षे पुरातनकालादेव शृंगारसामग्रीणां प्राचुर्यं प्रावर्तत। वैदिकवाङ्मये रामायणमहाभारतकौटिल्यार्थशास्त्रभरतनाट्यशास्त्रवात्स्यायनकामसूत्रललितविस्तरादिषु ग्रन्थेषु नानाविधानि वस्त्राणि प्रसाधनानि चोल्लिखितानि। भारतीयसंस्कृतेः स्वर्णयुगे लब्धजन्मनो महाकविकालिदासस्य ग्रन्थेषु तावत् तत्समयवर्तिसौन्दर्यसामग्र्या एवंविधं हृदयावर्जकं वर्णनं यत्तत् पठन्नेव सौन्दर्यपिपासुः सुजनः आनन्दातिरेकेण पुलकिततनुर्जायते। यदा मथुरास्थितमूर्त्तिषु अजन्तायाश्च चित्रेषु अङ्कितेन प्रतिकर्मप्रकारेण सह कालिदासीयालङ्करणविधावर्णनं सङ्गच्छते तदा गुप्तकालिकी लोकोत्तरा संस्कृतिर्नयनयोः पुरस्तान् नृत्यतीव।

## सहजसौन्दर्यवर्धने प्रसाधनानां साहाय्यम्

सौन्दर्यप्रियो महाकविकालिदासो निसर्गजं सौन्दर्यमेव स्वकीयकवितायै वृणुतेतराम् । विक्रमोर्वशीयस्य नायिकाया उर्वश्याः शरीरं भूषणानां भूषणं शृङ्गारप्रसाधनानामपि प्रसाधनम्, उपमानानामपि प्रत्युपमानम्[1] । अनेनासौ सहजसौन्दर्यमेव सर्वविधसौन्दर्यातिशायीति प्रतिपादयति । यद्यप्यसौ शकुन्तलाम् अधिकृत्येदमभिदधाति—

इयमधिकमनोज्ञा वल्कलेनापि तन्वी,
किमिव हि मधुराणां मण्डनं नाकृतीनाम्[2]

तथाप्यसौ नारीसौन्दर्यवृद्धये अलङ्काराणां साहाय्यम् आवश्यकमित्यङ्गीकरोति । पतिगृहगमनात् पूर्वं शकुन्तलां सख्यौ मङ्गलाभरणैरलङ्कुरुतः । शकुन्तलाया आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते इति विचिन्त्य खिद्यते प्रियंवदा । तदैव ऋषिकुमारकौ प्रसाधनसामग्रीमानीय वनस्पतिचमत्कारं वर्णयतः । आश्रमतरुभिर्वनस्पतिभिश्च शकुन्तलायै कतिचिद् उपायनानि सम्प्रषितानि । केनचिद् इन्दुपाण्डुक्षौमं प्रहितं, केनचिच् चरणोपभोगसुलभो लाक्षारसः प्रदत्तः । अन्यैश्च बहुविधाभरणानि दत्तानि ।[3] शकुन्तलां मङ्गलवस्त्राभूषणैः भूषयन्त्यौ सख्यौ यद्यपि "अनुपयुक्तभूषणोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेषु ते आभरणविनियोगं कुर्वः" इति भणतः परं शकुन्तला तु तयोर्नैपुण्यं जानात्येव[4] । एवमेव विवाहावसरे पार्वतीमपि सौभाग्यवत्यः पुत्रवत्यो नार्यो मण्डनैर्मण्डयन्ति[5] । आभरणैर्भूषिता सा कुसुमैरलङ्कृता लतेव, तारकगणैः शोभिता शर्वरीव, विहंगैर्युक्ता सरिदिव विभातितराम्[6] ।

## विविधेष्ववसरेषु वेषभूषादीनां वैविध्यम्

कालिदासस्य पात्राणि नैकविधेष्ववसरेषु नैकविधानि ऋत्वनुकूलान्यवसरोचितानि च परिधानानि धारयन्ति । पुरुषाणामिमानि त्रीणि वस्त्राणि बहुश उल्लिखितानि—शिरोवेष्टनमधोवस्त्रं स्कन्धावेष्टनमुत्तरीयञ्च । रमणीनां चेदं वस्त्रयुगलं—स्तनावरणकूर्पासको नीविबन्धेन बद्धमधोवस्त्रं च । राजसभायां समासीना राजकुमारा अन्यद् वेषमधारयन् मृगयावसरे चान्यदेव । रघुवंशे राजकुमारोऽजः "कुशलविरचितानुकूलवेषः क्षितिपसमाजमगात्"[7] । मृगयासक्तो दशरथो "मृगवनोपगमवेषभृत्" अदृश्यत । तस्य मौलौ वनमाला अशोभत,

तरुकिसलयवर्णसन्निभो हरितः कवचः शरीरमाच्छादयत्, कर्णयोश्च चञ्चलकुण्डले अकम्पेताम्[8]। मालविकाग्निमित्रे कतिपयाटविकाः प्रतिरोधकास्तूणीरपट्टपरिणद्धभुजान्तराला आपार्ष्णिलम्बिशिखिबर्हकलापं धारयन्तो वर्णिताः[9]।

कौमारे शिवपूजायै प्रस्थिता पार्वती पद्मरागातिशायिभिरशोकपुष्पैर्हेमद्युतिभिः कर्णिकारैर्मुक्ताकलापीकृतसिन्धुवारैर्मण्डिता सञ्चारिणी पल्लवलतेव दृश्यते[10]। स्नानावसरे सा "अभिषेकयोग्यं वासो" वसाना वर्तते,[11] पत्यभिगमनकाले च "पत्युद्गमनीयवस्त्रा" शोभते[12]। इन्दुमती तावत् परिणयकाले "क्लृप्तविवाहवेशा" चकास्ति[13]। अनतिलम्बदुकूलनिवासिनी बहुभिराभरणैरलङ्कृता मालविका "विवाहनेपथ्येन" विराजते[14]। पुरूरवसो व्रतमाचरन्ती महिषी सितांशुका मङ्गलमात्रभूषणा पवित्रदूर्वाङ्कुरलाञ्छितालका व्रतविशेषं सम्पादयति[15]। दुष्यन्तविरहविधुरा शकुन्तला नियमक्षाममुखी धृतैकवेणी असंस्कारपाटलोष्ठं दधाना संलक्ष्यते[16]। मलिनवस्त्रयुगमस्निग्धकेशसंवलितैकवेणी च प्रोषितभर्तृकामेव सूचयतः। एवमेव विरहिणी यक्षपत्नी न्यस्ताभरणा शिखादाम हित्वा कठिनविषमामेकवेणीं धारयति। तैलादिरहितस्नानेन तस्याः परुषमेवालकं कोमलकपोलं स्पृशति। परिधूसरे वसने वसाना शकुन्तलेव सापि मलिनवसने वसाना तिष्ठति[17]। मालविकाग्निमित्रे कौशिकी स्वभ्रातुर्भर्त्योरनन्तरं नवीकृतवैधव्यदुःखा काषाये परिदधाति[18]। परं कालिदासवर्णिता वनिता विविधवस्त्रालंकरणैर्विभूषिता अपि विलोक्यन्ते। अलकास्थसुन्दरीणां शृङ्गारसज्जामुपवर्णयन् यक्षो मेघमेवमाह –तत्रस्था रमण्यः कुन्तलेषु बालकुन्दपुष्पाणि ग्रथ्नन्ति, मुखश्रीं लोध्रपुष्पाणां परागेण पाण्डुतां नयन्ति, कर्णयोः शिरीषपुष्पे, चूडापाशे नवकुरबकं सीमन्ते नीपकुसुमं धारयन्ति[19]। एकः कल्पवृक्ष एव तत्र रमणीभ्यो नानाप्रसाधनजातं जनयति। नानावर्णं वासो, नयनयोर्विभ्रमाणामुपदेशे दक्षं मधु, चरणकमलन्यासयोग्यो लाक्षारागः, पल्लवैः सह कुसुमानीति देहमण्डनोचितानि सर्वाणि मण्डनानि कल्पवृक्षो दातुं प्रभवति[20]।

### ऋत्वनुरूपवेषभूषे

ऋतुसंहारकाव्ये षड् ऋतून् वर्णयता महाकविना तन्मध्ये परिवर्तमानं नागरिकजीवनमङ्कितम्। पुरुषाणां पुरन्ध्रीणां च वेषभूषे ऋतौ ऋतौ परिवर्तनम् आप्नुतः। वर्षर्तौ वनिताः प्रतनुसितदुकूलानि[21] शिशिरर्तौ च रागरञ्जितवस्त्राणि धारयन्ति[22]। वसन्तकाले भूमिः रक्तांशुका नववधूरिव भाति[23],

शरदि च सा काशांशुका भ्राजते[24]। ग्रीष्मर्तौ स्त्रियः सदुकूलमेखलैर्नितम्बैः, सहारैश्चन्दनलिप्तैः स्तनैः, नितान्तलाक्षारसरागरञ्जितैर्हंसरुतानुकारिभिः सनूपुरैश्चरणैश्च कामिनां निदाघं शमयन्ति। गुरूणि वासांसि विमुच्य प्रमदास्तन्वंशुकं धारयन्ति[25]। परं हेमन्तकाले तु ता नितम्बबिम्बेषु नवं दुकूलं, पीनपयोधरेषु च सूक्ष्मवस्त्रं न परिदधति[26]। प्रावृषि ताः सकालागुरुं चन्दनमङ्गेषु निवेशयन्ति[27]। शिशिरकाले ताश्चन्द्रमरीचिशीतलं चन्दनं परित्यज्य कुङ्कुमरागेण पयोधरान् पिञ्जरीकुर्वन्ति[28], प्रतनुसितदुकूलानि विहाय गुरूणि वस्त्राणि धारयन्ति[29]। मनोज्ञकूर्पासकपीडितस्तनाः रञ्जितकौशेयकालंकृतोरवस्ताः निवेशितान्तःकुसुमैः शिरोरुहैर्हिमागमं विभूषयन्तीव[30]।

ऋतुराजवसन्ते तावन् नारीश्रृङ्गारसज्जापि परां कोटिमधिरोहति। विलासिनीनां नितम्बानि कुसुम्भरागारुणितैर्दुकूलैः शोभन्ते, स्तनमण्डलानि कुङ्कुमरागगौरैस्तन्वंशुकैरलंक्रियन्ते।गुरूणि वासांसि विहाय विलासिन्यो लाक्षारसरञ्जितेभ्यः सुगन्धिकालागुरुधूपितेभ्यस्तनुवस्त्रेभ्यः स्पृहयन्ति। स्तनेषु मृगनाभियुक्तं प्रियंगुकालीयककुंकुमाक्तं चन्दनमालिम्पन्ति[31]। मालविकाग्निमित्रे वसन्तकाले प्रमदवनलक्ष्म्या वसन्तकुसुमनैपथ्यं युवतिवेषलज्जापयितृकमस्ति। वसन्तश्रियो रक्ताशोककान्तिर् युवतीनां बिम्बाधररागमतिशेते, श्यामावदातारुणानि कुरबकपुष्पाणि विशेषकं प्रत्याख्यान्ति, द्विरेफाञ्जनैर्युक्तानि तिलककुसुमानि तिलकक्रियामभिभवन्ति। एवं प्रसाधनविधौ माधवीश्रीः योषितां श्रियं सावज्ञमतिक्राम्यति[32]।

## बहुविधवस्त्रोल्लेखनम्

वस्त्राणां क्षौमदुकूलकौशेयचीनांशुकपत्रोर्णादयो नैके भेदा अवलोक्यन्ते कालिदासग्रन्थेषु[33]। सितारुणनीलश्यामकौसुम्भवर्णरञ्जितपरिधानानामप्यत्र वर्णनम्। रघुवंशे हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव शुभ्रवाससोः सुदक्षिणादिलीपयोः कापि सुषमा समलक्ष्यत[34]। जितारुणोदयलालिमभिर्वस्त्रैर्विलासिजनो वशीकृतः[35]। पार्वती तरुणार्करागं वसनमधारयत्[36]। लवकुशाभ्यां सह राममभिगच्छन्ती सीता काषायवस्त्राणि वसानादृश्यत[37]। ऋतुसंहारे वसन्तर्तौ कुसुम्भरागरञ्जितवसना रमण्यो वर्णिताः[38]। विक्रमोर्वश्यां वसुधावनितायाः शुकोदरश्यामं स्तनांशुकमुपवर्णितम्[39]। मेघदूते गम्भीरा नदी नीलं सलिलवसनं पर्यधात्[40] गजदन्तच्छेदवद्गौरस्य कैलासस्य उपरि गच्छतो मेघस्य शोभा

बलभद्रस्य अंसन्यस्तमेचकवाससश्छविरिवासीत्[41]। पशुपक्षिणां चित्राण्यपि वस्त्रेषु निरमीयन्त। रघुवंशे अतिथिनामधेयो राजा हंसचिह्नांकितं वस्त्रं बभार[42]। कुमारसम्भवे पार्वती कलहंसलक्षणं वधूदुकूलं शरीरेऽन्यदधात्[43]। रघुवंशे रत्नग्रथितोत्तरीयं निश्वासाहार्यांशुकं च वर्णिते[44]।

## विभिन्नाभूषणोल्लेखनम्

कालिदासीयग्रन्थेषु हृदयावर्जकानि दीप्तिभाञ्जि चानेकानि आभरणानि दृष्टिपथमारोहन्ति। राजपुरुषाणां शिरस्सु किरीटं[45] चूड़ामणिः[46] शिखामणिश्च[47] बभुः। रमणीनां सीमन्तेष्वलकेषु च मुक्ताजालं[48] बभ्राज। कर्णेषु ताटङ्कचक्रं[49], काञ्चनकुण्डलं[50], मणिकुण्डलम्[51], अमलदन्तपत्रं[52], कनककमलानि[53] शुशुभिरे। वक्षस्सु बहुविधहाराः प्रालम्बो[54]मुक्ताफलहारवल्ली[55], तरलगुटिकास्ताहाराः[56] स्थूलमध्येन्द्रनीलं मुक्तागुणं[57] च व्यराजन्त। पुरुषाणां बाहवः वलयाङ्गदकेयूरैरशोभन्त[58]। स्त्रियोऽपि काञ्चनकङ्कणान्यधारयन्, अंगुलिषु च नामाङ्कितांगुलीयकान्यधुः[59]। मध्यभागे हेमकाञ्च्यः क्वणितरशनाः किङ्किण्योऽबध्यन्त[60]। चरणेषु मुखरनूपुराण्यध्वनन्[61]।

## शरीराङ्गसम्बन्धिनी प्रसाधनसामग्री

रमण्योऽञ्जनशलाकया स्वविलोचने साञ्जने व्यधुरिति वर्णनं कुमारसम्भवे समुपलभ्यते[62]। भ्रुवोः कान्तिरपि अञ्जनशलाकया वृद्धिमवाप[63]। भाले च तिलकरचना हरितालेन मनःशिलया, अञ्जनेन कुङ्कुमेन चन्दनेन च व्यधीयत[64]। भक्तिरपि तिलकरचनाया एवासीत् प्रकारविशेषो यत्र कुङ्कुमबिन्दुनिर्मितवृत्तमध्ये श्वेतचन्दनतिलकमशोभत, श्वेतचन्दनबिन्दुमध्ये च कुङ्कुमतिलकम्। अलकायाः कामिन्यो लोध्रप्रसवरजसा मुखकान्तिं पाण्डुतां निन्युः[65]; कपोलौ लोध्रपरागेण रूक्षतां तैलराहित्यं च प्रापतुः[66]। अधरोष्ठस्य प्रसाधनं मधूच्छिष्टेन रागेण चाक्रियत[67]। मुखस्योपरि गोरोचनागुरुलेपेन पत्रलेखरचना व्यरच्यत। कुमारसम्भवे शिवः पार्वत्याः कपोलपाल्यां मृगनाभिचित्रपत्रावलीं निरमाद् इति वर्णितम्[68]। चन्दनकुङ्कुमादीनि लेपनद्रव्याणि वक्षःस्थलस्य सौन्दर्यं सौरभ्यमाकर्षकत्वं चोत्पादयामासुः[69]।

केशप्रसाधनमपि बहुविधमासीत्। नार्यो धूपोष्मणा स्वकेशानामार्द्रभावं त्याजितवत्यः, ऋत्वनुरूपैर्नानाकुसुमैः कुन्तलानलङ्कृतवत्यः[70]। काचित् सखी

दूर्वामध्यस्थापितैः पाण्डुमधूकपुष्पैः पार्वत्याः केशबन्धं रमणीयं चकार[71]। अलकायां वध्वोऽलकेषु बालकुन्दं, चूडापाशे नवकुरबकं, सीमन्ते च नीपमधारयन्[72]। वर्षाकाले नार्यः कदम्बनवकेसरकेतकीपुष्पैः स्वकुन्तलानशोभयन्[73]।

चरणेषु लाक्षारसप्रयोगो बहुकृत्वो वर्ण्यते[74]। अभिज्ञानशाकुन्तले वनस्पतिभिः शकुन्तलायै प्रेषितेषु प्रसाधनेषु चरणोपभोगसुलभो लाक्षारसोऽपि वर्तते[75]। विक्रमोर्वश्यामुर्वश्या अलक्तकरञ्जितौ पादौ पुरूरवा ध्यायति[76]। मालविकाग्निमित्रे मालविकायाश्चरणान्तनिवेशिता रागलेखा वर्णिता[77]।

अस्यामङ्गसज्जायां मुकुरस्य स्थानविशेषोऽभिलक्ष्यते। ऋतुसंहारे दर्पणसक्तहस्ता काचिद् रमणी वदनारविन्दं विभूषयन्ती दृश्यते[78]। कुमारसम्भवे पार्वती समलंकृतमात्मानमादर्शबिम्बे समवलोक्य स्तिमितायताक्षी जायते[79]। मेघदूताभिज्ञानशाकुन्तलयोरपि दर्पणपदस्य संकेताः समुपलभ्यन्ते[80]।

प्रसाधनविधौ प्रसाधिकाया अप्यतीव महत्त्वमासीत्। रघुवंशेऽजं कुमारसम्भवे च शिवं द्रष्टुकामा काचिद् रमणी प्रसाधिकया रज्यमानं द्रवरागान्वितं स्वचरणमाक्षिप्यागवाक्षम् अलक्तकाङ्कां पदवीमातन्वती दृश्यते[81]।

अनेन प्रतिकर्मवर्णनेन प्रकाश्यमाना कालिदासकालिकी संस्कृतिस्तत्समयवर्तिनो जना अध्यात्मरुचयः सन्तोऽपि भौतिकसुखानामुपेक्षां नाकार्षुरिति सूचयति। एकतो धर्मदर्शनकाव्यग्रन्थास्तेषामात्मिकसौन्दर्यं वर्धयामासुः अपरतश्च वस्त्राभूषणाङ्गरागाणामियं समृद्धिस्तेषां बाह्याकृतिरामणीयकमेधांचक्रे। तदानींतनं सौन्दर्यविधानमिदं नासीत् पापवृत्तये[82]।

——:o:——

1. विक्रमोर्वशीयम्, अङ्कः २, श्लोकः ३।
2. अभिज्ञानशाकुन्तलम्, अङ्कः १, श्लोकः १९।
3. तत्रैव, अङ्कः ४, श्लोकः ५।
4. तत्रैव, अङ्कः ४; जाने वां नैपुणम् तत्रव ४, ५ गद्यभागः
5. कुमारसम्भवम्, सर्गः ७, श्लोक ६
   तस्याः शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः॥
6. तत्रैव, श्लोक २१
   सा सम्भवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिवत्रियामा।
   सरिद्विहंगैरिव लीयमानैरामुच्यमानाभरणा चकासे॥

7. रघुवंशम्, सर्गः ५, श्लोकः ७६
8. तत्रैव, सर्गः ६, ५०
   तत्रैव सर्गः ६, ५१

   ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।
   तुरगवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥

9. मालविकाग्निमित्रम्, अंकः ५, श्लोक १०
10. कुमारसम्भवम्, सर्गः १, श्लोकौ ५३, ५४
11. तत्रैव, सर्गः ७, श्लोकः ६

   तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालेयकृताङ्गरागाम् ।
   वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काभिमुखं व्यनैषुः ॥

12. तत्रैव, सर्गः ७, श्लोकः ११
13. रघुवंशम्, सर्गः ६, श्लोकः १०
14. मालविकाग्निमित्रम्, अङ्कः ५, श्लोकः ७
15. विक्रमोर्वशीयम्, अङ्कः ३, श्लोकः १२
16. अभिज्ञानशाकुन्तलम् अङ्क ७, श्लोकाः २१, २३
17. मेघदूतम्, उत्तरमेघः श्लोकाः २८, २९, ३०
18. मालविकाग्निमित्रम्, अङ्क ५
19. मेघदूतम्, उत्तरमेघः, श्लोकः २
20. तत्रैव, श्लोकः ११
21. ऋतुसंहारम् सर्गः २, श्लोकः २६
22. तत्रैव, सर्गः ५, श्लोकः ८, सरागकौशेयकभूषितोरवः ।
23. तत्रैव, सर्गः ६, श्लोकः २१
24. तत्रैव, सर्गः ३, श्लोकः १
25. तत्रैव, सर्गः १, श्लोकाः ४, ५, ७
26. तत्रैव, सर्गः ४, श्लोकः ३
27. तत्रैव, सर्गः २, श्लोकः २२, कालागुरुप्रचुरचन्दनचर्चिताङ्ग्यः ।
28. तत्रैव, सर्गः ५, श्लोकः ९
29. तत्रैव, सर्गः ५, श्लोकः २
30. तत्रैव सर्गः ५, श्लोकः ८
31. तत्रैव, सर्गः ६, श्लोकाः ५, १४, १५

32. मालविकाग्निमित्रम्, अङ्क ३, श्लोक: ५

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तक:
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनै:
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ।।

33. मालविकाग्निमित्रम् अङ्क: ५, श्लोक १२; अभिज्ञानशाकुन्तलम् अङ्क: १ श्लोक ३२ ।

ऋतुसंहारम्, सर्ग: २, श्लोक: २६; सर्ग: ५, श्लोक: ८

34. रघुवंशम्, सर्ग: १, श्लोक: ४६
35. तत्रैव सर्ग: ९, श्लोक: ४३; अरुणरागनिषेधिभिरंशुकै: ।
36. कुमारसम्भवम्, सर्ग: ३, श्लोक: ५४
37. रघुवंशम् सर्ग: १५, श्लोक: ७७
38. ऋतुसंहारम्, सर्ग: ६, श्लोक: ५
39. विक्रमोर्वशीयम्, अङ्क: ४, श्लोक: १७
40. मेघदूतम्, पूर्वमेघ:, श्लोक ४१
41. तत्रैव उत्तरमेघ:, ५८
42. रघुवंशम्, सर्ग: १७, श्लोक: २५
43. कुमारसम्भवम्, सर्ग: ५, श्लोक: ६७
44. रघुवंशम्, सर्ग: १६, श्लोक: ४३
45. रघुवंशम्, सर्ग: ६, श्लोक: १९
46. कुमारसम्भवम् सर्ग: ९, श्लोक: ४४
47. रघुवंशम्, सर्ग: ६, श्लोक: ३४
48. मेघदूतम्, पूर्वमेघ:, श्लोक: ६३
49. कुमारसम्भबम्, सर्ग: ९, श्लोक: २३, ताटङ्कचक्रद्वितयं न्यधात्स: ।
50. ऋतुसंहारम्, सर्ग: ३, श्लोक: १९
51. तत्रैव, सर्ग २, श्लोक: २०
52. कुमारसम्भवम्, सर्ग: ७, श्लोक: २३, कर्णावसक्तामलदन्तपत्रं ।
53. मेघदूतम्, उत्तरमेघ: श्लोक: ९
54. रघुवंशम्, सर्ग: ६, श्लोक: १४
55. कुमारसम्भवम्, सर्ग: ९, श्लोक: २४
56. मेघदूतम्, पूर्वमेघ:, श्लोक: ३४

57. तत्रैव, श्लोकः ५०
58. रघुवंशम्, सर्गः १६, श्लोकः ५६, ऋतुसंहारम् सर्गः ६, श्लोकः ७
59. अभिज्ञानशाकुन्तलम् अङ्कः ४ विष्कम्भकः
60. मालविकाग्निमित्रम्, अङ्कः ३, श्लोकः २१, मेघदूतम्, पूर्वमेघः, श्लोकः ३८, ऋतुसंहारम्, सर्गः ३, श्लोकः २६, कुमारसम्भवम्, सर्गः ९, श्लोकः २५
61. मालविकाग्निमित्रम्, अंकः ३, श्लोकः १७
62. कुमारसम्भवम्, सर्गः ७, श्लोकौ २०, ५९
63. तत्रैव, सर्गः १, श्लोकः ४७
64. तत्रैव, सर्गः ७, श्लोकौ २३, २४
65. मेघदूतम्, उत्तरमेघः श्लोकः २
66. कुमारसम्भवम्, सर्गः ७, श्लोकौ ९, १७
67. तत्रैव, सर्गः ७, श्लोकः १८
68. तत्रैव, सर्गः ९, श्लोकः २२
69. मेघदूतम् पूर्वमेघः, श्लोकः ५३, ऋतुसंहारम्, सर्गः १, श्लोकः ६, सर्गः ५, श्लोकः ९
70. ऋतुसंहारम् सर्गः २, श्लोकौ २१, २२; सर्गः ५, श्लोकः १२, कुमारसम्भवम्, सर्गः ७, श्लोकः १४
71. तत्रैव, सर्गः ७, श्लोकः १४
72. मेघदूतम्, उत्तरमेघः २
73. ऋतुसंहारम्, सर्गः २, श्लोकः २१
74. तत्रैव, सर्गः १, श्लोकः ५, कुमारसम्भवम् सर्गः ७, श्लोकौ १९, ५८
75. अभिज्ञानशाकुन्तलम्, अङ्कः ४, श्लोकः ५,
76. विक्रमोर्वशीयम्, अङ्कः ४, श्लोकः १६
77. मालविकाग्निमित्रम्, अङ्क ३, श्लोकः ११
78. ऋतुसंहारम्, सर्गः ४, श्लोकः १५
79. कुमारसम्भवम् सर्गः ७, श्लोकः २२
80. मेघदूतम् १, ६२, अभिज्ञानशाकुन्तलम् अङ्कः ७, श्लोकः ३२
81. कुमारसम्भवम् सर्गः ७, श्लोकः ५८, रघुवंशम्, सर्गः ७, श्लोकः ७
82. कुमारसम्भवम् सर्गः ५, ३६,



# शिक्षाशास्त्री कालिदासः

प्रा० शम्भुनाथशर्मा, जम्मूविश्वविद्यालयः

कस्यापि देशस्य समाजस्य वा समुन्नतेः समृद्धेश्च मूलकारणं तत्रत्या शिक्षैव भवति। सच्छिक्षामन्तरा समाजो हि पङ्गुः। सा च तदानीन्तनसाहित्ये प्रतिफलति। कालिदासकृतयस्तदर्थं सुन्दरं निदर्शनम्। शिक्षाक्षेत्रे कालिदासः क्रान्तिकरान् विचारानुपस्थापयति। शाकुन्तले कण्वाश्रमस्य, विक्रमोर्वशीये च्यवनाश्रमस्य रघुवंशे च वरतन्तोः वाल्मीकेश्चाश्रमयोः वर्णनमायाति। मालविकाग्निमित्रे च कविः शिक्षासिद्धान्तानुल्लिखति। चतुर्णां कुलपतीनामेतेषामाश्रमा एव शिक्षायाः प्रधानानि केन्द्राण्यासन्। आश्रमाणां स्थापना नगराद्बहिः कस्मिश्चिदपि तादृशे स्थानेऽभूत्, यत्र नागरिककोलाहलस्याभावोऽभवत्। परन्तु प्रकृतेः सर्वासां सामग्रीणां सौलभ्यमासीत्। कुलपतेः कण्वस्याश्रमो हिमालयस्योपत्यकायामनुमालिनीतीरमासीत्, यच्च दुष्यन्तराजधान्या अतिदूरं बहुभिः दिनैरेव गन्तुमशक्त जनः। वसिष्ठाश्रमं दिलीपो रथेन प्रायोऽह्ना प्राप। कुलपतेः च्यवनस्याश्रमो नातिदूरमासीत्, यतः पुरूरवस आत्मज आयुस्तापसी च न चिरादेव राजधानीं प्रापतुः। प्राचीनकाले साधारणः कोऽपि जनः न कुलपतिपदमलङ्कर्तुं प्राभवत्। प्रत्युत, महानेव कश्चित् जनः न्ययुज्यत, यः दशसहस्रछात्राणां पालनायाक्षमिष्ट। तथाहि—

मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात्
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः॥

किञ्च पद्मपुराणे—

आचार्यो बहुशिष्याणां मुनीनामग्रणीस्तु भव्यः।
व्रतयज्ञादिकर्माढ्यः स वै कुलपतिः स्मृतः॥

कतिचित्सम्पन्नाः स्वगृहेष्वेव शिक्षकान्नियुज्य स्वबालानां शिक्षणाय प्रबबन्धुः। रघुः स्वगृह एव शिक्षितोऽभूत्, धनुर्विद्याञ्च स्वपितुरशिक्षिष्ट[1]। इरावती-मालविकयोः नृत्यगानादिशिक्षा राजहर्म्येष्वेव समपद्यत। इन्दुमती स्वपत्युरजस्य ललिते कलाविधौ प्रियशिष्यासीत्[2]।

आश्रमेषु सहशिक्षापाठ्यक्रमविषये यद्यपि कालिदासो न विशेषेण वक्ति[3], तथापि बालिकानां शिक्षाश्रमेषु अभूत्। शकुन्तला प्रियंवदानसूया चाश्रमे एव पालिताः पोषिताः शिक्षिताश्च बभूवुः।

कुलपतिः वाल्मीकिः परित्यक्तां सीतामेवं सान्त्वयति—

पुष्पं फलं चार्तवमाहरन्त्यो बीजञ्च बालेयमकृष्टरोहि।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम्[4]॥

प्राचीनभारते साधारणतो जनः गृहस्थाश्रमादनन्तरं तपोवनाश्रममाशिश्रिये[5]। तदा कदाचित् बाला अपि सह न्यवसन्। शाकुन्तले मारीचाश्रमे सर्वदमनं दृष्ट्वा दुष्यन्तोऽनुमाति—

अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम्।
भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम्।
नियतैकव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम्[6]॥

विधिवदुपनीतः संभवतोऽष्टवर्षदेशीयो बालः आश्रमशिक्षायै स्वीकृतोऽभूयत तत्र चाष्टौ दश वा वर्षाण्यध्यैत। विक्रमोर्वशीये पञ्चमेऽङ्के द्वादशश्लोकानन्तरमुर्वशीं प्रति तापसी—

वत्से एष गृहीतविद्य आयुः साम्प्रतं कवचहरः संवृत्तः। तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः।

एतस्मात्कथनात्संभाव्यते यदायुष आयुः सप्तदशाष्टादश वा वर्षाणि स्यात्। प्रतिभाशालिनो विप्राः चतुर्दश विद्यानामध्ययनहेतोरधिककालं गुरुपार्श्वे न्यवसन्। शकुन्तला सह सखिभ्यामापरिणयमाश्रमे एव तस्थौ। शकुन्तलोद्वाहानन्तरं तयोरपि विषये कण्वः निश्चिच्ये। तद्यथा चतुर्थेऽङ्के—

कण्वः—वत्से ! परिष्वजस्व मां सखीजनञ्च।
शकुन्तला—तात ! इत एव किं प्रियंवदानसूये सख्यौ निवर्त्तिष्येते।
कण्वः—वत्से ! इमे अपि प्रदेये। न युक्तमनयोस्तत्र गन्तुम्।

हारीतधर्मसूत्रेषु शिक्षार्थिनीनां सद्योवधूरिति, ब्रह्मवादिनी चेति द्वैविध्य-

# शिक्षाशास्त्री कालिदासः

प्रा० शम्भुनाथशर्मा, जम्मूविश्वविद्यालयः

कस्यापि देशस्य समाजस्य वा समुन्नतेः समृद्धेश्च मूलकारणं तत्रत्या शिक्षैव भवति। सच्छिक्षामन्तरा समाजो हि पङ्गुः। सा च तदानीन्तनसाहित्ये प्रतिफलति। कालिदासकृतयस्तदर्थं सुन्दरं निदर्शनम्। शिक्षाक्षेत्रे कालिदासः क्रान्तिकरान् विचारानुपस्थापयति। शाकुन्तले कण्वाश्रमस्य, विक्रमोर्वशीये च्यवनाश्रमस्य रघुवंशे च वरतन्तोः वाल्मीकेश्चाश्रमयोः वर्णनमायाति। मालविकाग्निमित्रे च कविः शिक्षासिद्धान्तानुल्लिखति। चतुर्णां कुलपतीनामेतेषामाश्रमा एव शिक्षायाः प्रधानानि केन्द्राण्यासन्। आश्रमाणां स्थापना नगराद्बहिः कस्मिश्चिदपि तादृशे स्थानेऽभूत्, यत्र नागरिककोलाहलस्याभावोऽभवत्। परन्तु प्रकृतेः सर्वासां सामग्रीणां सौलभ्यमासीत्। कुलपतेः कण्वस्याश्रमो हिमालयस्योपत्यकायामनुमालिनीतीरमासीत्, यच्च दुष्यन्तराजधान्या अतिदूरं बहुभिः दिनैरेव गन्तुमशक्त जनः। वसिष्ठाश्रमं दिलीपो रथेन प्रायोऽह्ना प्राप। कुलपतेः च्यवनस्याश्रमो नातिदूरमासीत्, यतः पुरूरवस आत्मज आयुस्तापसी च न चिरादेव राजधानीं प्रापतुः। प्राचीनकाले साधारणः कोऽपि जनः न कुलपतिपदमलङ्कर्तुं प्राभवत्। प्रत्युत, महानेव कश्चित् जनः न्ययुज्यत, यः दशसहस्रछात्राणां पालनायाक्षमिष्ट। तथाहि—

मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात्<br>
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः॥

किञ्च पद्मपुराणे—

आचार्यो बहुशिष्याणां मुनीनामग्रणीस्तु भव्यः।<br>
व्रतयज्ञादिकर्माढ्यः स वै कुलपतिः स्मृतः॥

कतिचित्सम्पन्नाः स्वगृहेष्वेव शिक्षकान्नियुज्य स्वबालानां शिक्षणाय प्रबबन्धुः। रघुः स्वगृह एव शिक्षितोऽभूत्, धनुर्विद्याञ्च स्वपितुरशिक्षिष्ट[1] । इरावती-मालविकयोः नृत्यगानादिशिक्षा राजहर्म्येष्वेव समपद्यत । इन्दुमती स्वपत्युरजस्य ललिते कलाविधौ प्रियशिष्यासीत्[2] ।

आश्रमेषु सहशिक्षापाठचक्रमविषये यद्यपि कालिदासो न विशेषेण वक्ति[3], तथापि बालिकानां शिक्षाश्रमेषु अभूत् । शकुन्तला प्रियंवदानसूया चाश्रमे एव पालिताः पोषिताः शिक्षिताश्च बभूवुः ।

कुलपतिः वाल्मीकिः परित्यक्तां सीतामेवं सान्त्वयति—

पुष्पं फलं चार्तवमाहरन्त्यो बीजञ्च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम्[4] ॥

प्राचीनभारते साधारणतो जनः गृहस्थाश्रमादनन्तरं तपोवनाश्रममाशिश्रिये[5] । तदा कदाचित् बाला अपि सह न्यवसन् । शाकुन्तले मारीचाश्रमे सर्वदमनं दृष्ट्वा दुष्यन्तोऽनुमाति—

अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।
भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम्[6] ॥

विधिवदुपनीतः संभवतोऽष्टवर्षदेशीयो बालः आश्रमशिक्षायै स्वीकृतोऽभूयत तत्र चाष्टौ दश वा वर्षाण्यध्यैत । विक्रमोर्वशीये पञ्चमेऽङ्के द्वादशश्लोकानन्तरमुर्वशीं प्रति तापसी—

वत्से एष गृहीतविद्य आयुः साम्प्रतं कवचहरः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः ।

एतस्मात्कथनात्संभाव्यते यदायुष आयुः सप्तदशाष्टादश वा वर्षाणि स्यात् । प्रतिभाशालिनो विप्राः चतुर्दश विद्यानामध्ययनहेतोरधिककालं गुरुपार्श्वे न्यवसन् । शकुन्तला सह सखिभ्यामापरिणयमाश्रमे एव तस्थौ । शकुन्तलोद्वाहानन्तरं तयोरपि विषये कण्वः निश्चिच्ये । तद्यथा चतुर्थेऽङ्के—

कण्वः—वत्से ! परिष्वजस्व मां सखीजनञ्च ।
शकुन्तला—तात ! इत एव किं प्रियंवदानसूये सख्यौ निवर्त्तिष्येते ।
कण्वः—वत्से ! इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् ।

हारीतधर्मसूत्रेषु शिक्षार्थिनीनां सद्योवधूरिति, ब्रह्मवादिनी चेति द्वैविध्य-

मुक्तम् । तत्र प्रथमा शिक्षानन्तरं परिणिनाय । अपरा च यावज्जीवं ब्रह्मचर्यमाचचार । स्थितिरेषा ध्वन्यते शाकुन्तले[8] दुष्यन्तप्रश्ने—

राजा—इति सखीं ते ज्ञातुमिच्छामि—

वैखानसं किमनया व्रतमाप्रदानात् व्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमेव मदिरेक्षणवल्लभाभिराहो निवत्स्यति समं हरिणाङ्गनाभिः ॥

आश्रमजीवनं सरलमासीत् । शिक्षापेक्षया दीक्षा तत्राधिका ध्यातव्यासीत् । महाराजो रघुः कौत्सं समाचारं पृच्छन्नाश्रमसम्बन्धिनीं सर्वां व्यवस्थां व्यवृणोत्[9] । परित्यक्तायाः सीतायाः प्रसङ्गे वाल्मीकेराश्रमस्य व्यवस्था दृग्गोचरीभवति[10] । स्नातकाः पर्णकुटीः निर्माय पृथक् पृथक् निवसन्ति । वल्कलधारिणः सन्तोऽकृष्टरोहि नीवारं वन्यफलादिकं वा भुञ्जते । शयनाय दर्भशय्यां मृगचर्म वोपयुञ्जते । गुरुदक्षिणाप्राप्तेन धनेन छात्राणां भोजनावासव्यवस्था भवति । आश्रमे वृक्षलतादिसेचनं, मृगादीनां निर्द्वन्द्वं संचारः, शान्तं वातावरणं[11], प्रेमवात्सल्ययोश्च पूर्णं साम्राज्यमासीत् । रात्रौ स्नातकाः इङ्गुदीतैलस्य दीपं प्रज्वाल्याधीयते[12] । व्रणविरोपणेऽपि इङ्गुदीतैलं प्रयुञ्जते[13] । ब्राह्ममुहूर्ते समुत्थायाध्ययनक्रमः बुद्धिं विमलीकरोति[14] । प्रातः सायं समिदाहरणाय, कुश-पुष्प-फलाद्याहरणाय च तपोवनाद्बहिः प्रतिष्ठन्ते स्नातकाः । यज्ञकर्मणो ऽनिवार्यता दृश्यते । आश्रमधर्मभंगो न सह्यते । आश्रममृगानुसारिणं दुष्यन्तं तपस्वी निरुणद्धि । विक्रमोर्वशीये गृहीतामिषं गृध्रं प्रहन्तारमायुषं च्यवनर्षिः विसृजति पितुः पुरूरवसः सकाशम् ।

कालिदासवर्णितकुलपतीनामाश्रमेषु विशेषतो वेदस्य शिक्षणमभवत् । क्षत्रियकुमाराः धनुर्वेदशिक्षामाप्नुवन्[15] । शाकुन्तले शकुन्तलायास्तत्सख्योः वार्तालापप्रसङ्गे तासामध्ययन-लेखन-चित्रकर्म-संगीत-गृहकृत्यादिविषयाणां शिक्षा प्रतीयते । वृक्षसेचनक्रियया बालिकानामपत्यप्रीतिर्वर्धते ।

पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यसि त्वम्[16] ॥

कतिचिन्नार्यः पुरुषवत् अन्यासां विद्यानामभ्यासमकुर्वन् । मालविकाग्निमित्रस्य परिव्राजिका विविधविद्यापारङ्गता विदुषी आसीत् । आश्रमाणां पाठ्यक्रमे चतुर्दशविद्यानां स्थानमासीदिति बहुभिः संकेतैः समर्थ्यते—

छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः[17] ।
वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये[18] ।

तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्[19] ।

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता[20] ।

साङ्गं च वेदमध्याप्य............[21]

यादृशी इतिहासप्रबन्धेषु कामयमानानामवस्था श्रूयते[22] ।

अप्यग्रणीर्मन्त्रकृतामृषीणाम्.........[23] ।

गुर्वर्थमर्थी श्रुतपारदृश्वा[24] ।

निम्नाङ्कितपद्ये कालिदासस्योपमा शिक्षकशिक्षार्थिसम्बन्धे अतिमहत्त्वपूर्णा—

यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः[25] ।

पद्येऽस्मिन् अज्ञानान्धकारनाशपूर्वकनवीनदृष्टिप्रदानकुशलः शिक्षकः रात्र्यन्धकारमपसार्य विश्वस्मिन् विश्वे चैतन्यमापादयता भास्करेणोपामायि। निष्ठावान् शिक्षकः समाजे उच्चस्थानमासादयेदिति कालिदासस्य सम्मतिः ।

सरस्वती श्रुतिमहती महीयताम्[26] ।

सन्त्यत्र केचित् तथाकथिताः शिक्षका ये केवलमुदरपालनव्यापारमाचरन्ति—

यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति[27] ।

शिक्षकाना विषये कालिदासस्य मतं निश्चितं प्रतीयते । तेन हि शिक्षकानां द्वैविध्यमुक्तम्—अगाधज्ञानवन्तः परन्तु तज्ज्ञानप्रतिपादनकौशलहीनाः इत्येके, अल्पज्ञानाः परं पाठनप्रक्रियाकुशलाः प्रदर्शनपण्डिता इत्यपरे । येषान्तूभयसिद्धिः—अर्थात् पूर्णज्ञानाः पण्डिताः पाठनप्रक्रियाचतुराः—त एव शिक्षकानां धुरि प्रतिष्ठापयितव्याः[28] । मालविकाग्निमित्रे प्रतिफलिताः शिक्षासिद्धान्ता आधुनिकतमा इव प्रतीयन्ते । विद्यार्थिनां चयनविषयेऽपि शिक्षकबुद्धिपरिचयो भवति । शिक्षकोऽपि शिक्षते शिक्षार्थिनः सकाशात् । सतताध्यापनानुभवेनैव शिक्षकोऽपि पूर्णतामेति । कालिदासस्य मते—

सुशिक्षितोऽपि सर्व उपदेशेन निष्णातो भवति ।

(मालविकाग्नि० प्रथमाङ्के १८ श्लोकानन्तरम् ।)

योग्याः शिक्षार्थिनः शिक्षककीर्तिं वर्धयन्ति । सोऽपि योग्यं विद्यार्थिनमुपलभ्य परां प्रीतिमातनोति ।—

गणदासः—भद्रे मयापि यशस्विना भवितव्यम् । यतः—

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥

(मालवि० १,१६)

शिक्षकप्रसादविषये केनाप्युक्तम्—

सर्वतो जयमन्विच्छेत् शिष्यादिच्छेत् पराजयम् ।

शिक्षार्थिसम्पदा शिक्षकः प्रसन्न एव भवति । महाकवेः कालिदासस्योद्गाराः मालविकायोग्यताविषये गणदासशब्दैः व्यज्यन्ते—

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात्प्रत्युपदिशतीव मे बाला । (१·५)

तत्रैव मन्दशिष्यस्वीकारेऽपि शिक्षकस्यैवायोग्यता ध्वनिता कविना—

देवी—यदा पुनर्मन्दमेधा शिष्या उपदेशं मलिनयन्ति, तदाचार्यस्य न दोषः ।

राजा—देवि ! एवमापठ्यते । विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयतीति ।

(१·१६ तमश्लोकानन्तरम्)

प्राचीनकालेऽपि गुरुकुलप्रवेशः अद्यतनीयान्तर्वीक्षणव्यापार ( Interview ) वत् न सुगम आसीत् । अत एव स्पष्टमवादि कविना—

क्रिया हि वस्तूपहिता प्रसीदति । (रघु० ३.२९)

अद्यत्वे तु येन केनाप्युपायेन परीक्षोत्तरणमेव सफलतायाः लक्षणं विद्यार्थिनः । परीक्षा द्यूतवत् लाटचकरीव (Lottery) वा संदिग्धपरिणामा संवृत्ता । सर्वत्र प्रमाणपत्रमेव योग्यतापत्ररूपेण प्रायः स्वीक्रियते । एतस्मात्कारणात् अपरिनिष्ठिता अपि छात्राः परीक्षायै उद्युञ्जते । परमग्रिमश्रेणीषु व्यवहारे वा न स्वात्मज्ञानं प्रकाशयितुमर्हन्ति यतस्तैर्नात्मसात्कृतं भवति ज्ञानम् । केवलं शुकपाठवत् रटनेन विद्या हृदयङ्गमा न भवति । तदर्थं निरन्तरमभ्यासोऽपेक्ष्यते—

विद्यामभ्यसनेनेव प्रसादयितुमर्हसि[२९] ।

अनात्मसात्कृतस्य ज्ञानस्य प्रकाशनं न केवलं विद्यार्थिनो हानिं जनयति, प्रत्युत शिक्षकं प्रत्यपि अन्यायो भवति । विद्यार्थिनिन्दा शिक्षकमपि स्पृशति, अत एव मालविकाग्निमित्रे प्रथमाङ्के सप्तदशश्लोकानन्तरं देवी धारिणी गणदासमुद्दिश्य वक्ति—

देवी—अपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रकाशनम् । अचिरोपनीता ते शिष्या ।

अद्यतनीयविश्वविद्यालयानां मण्डलानाञ्च कृतेऽपि मालविकाग्निमित्रे पर्याप्तसूचना लभ्यते ।

(i) परीक्षकाः परीक्षार्थिसम्बन्धिनः न स्युः ।

(ii) एकाधिकाः परीक्षकाः स्युः ।

यथा परीक्षार्थिनं प्रत्यन्यायः पक्षपातो वा न भवेत् । चित्रलेखन-नृत्यगीत-

विज्ञानादिप्रयोगप्रधानानां विषयानां ज्ञाननिर्णयः प्रत्यक्षप्रयोगैः (Practicals or viva voca) विधेयः। अद्यत्वे सर्वसम्मतेयं परीक्षणपद्धतिः सर्वत्र प्रायः। एतस्मिन् विषये मालविकाग्निमित्रे प्रथमाङ्के १५ श्लोकानन्तरं क्रियमाणे कथोपकथने कालिदासस्य विचाराः स्फुटाः—

राजा—भगवत्यत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसङ्घर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम्।

परिव्राजिका—(सस्मितम्) अलमुपालम्भेन। पत्तने सति ग्रामे रत्नपरीक्षा।

राजा—नैतदेवम्। पण्डितकौशिकी खलु भगवती, पक्षपातिनावहं देवी च।

आचार्यौ—सम्यगाह देवः। मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति।

राजा—तेन हि प्रस्तूयतां विवादः।

परिव्राजिका—देव ! प्रयोगप्रधानं हि नाटचशास्त्रम्। किमत्र वाग्व्यवहारेण ......

देवी—तेन हि द्वावपि भगवत्यायुपदेशं दर्शयतम्।

परिव्राजिका—देवि ! नैतन्न्याय्यम् सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय।

(१७ तम श्लोकानन्तरम्)

कालिदासः शिक्षार्थिनमपि शिक्षकाज्ञापालनायोपदिशति—

आज्ञा गुरूणां ह्यविचारणीया[30]।

आज्ञापालनप्रसन्नः गुरुः ग्रन्थग्रन्थीरुद्घाटयति। स सदैव शिष्यकल्याणमुद्दिशति। कालिदासमते—

प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः[31]।

ब्रह्मचर्यपालनाय शिक्षाग्रहणकालेऽवधानाय च कालिदासः प्रेरयन् रघुवंशिन उदाहरति—

शैशवेऽभ्यस्तविद्यानाम्[32]।

ततार विद्याः——[33]।

उद्देश्यम् शिक्षायाः—

अद्यानेके शिक्षाशास्त्रिणः शिक्षायाः उद्देश्यमनेकधा व्याहरन्ति। केषाञ्चिन्मते सैव सच्छिक्षा यया शरीरं सुदृढं, वाणी प्रगल्भा, मनश्च सुसंस्कृतं स्यात्। अन्ये तु व्याचक्षते—यया जन उत्तमो नागरिको भवेत्, जीविकासाधनक्षमः सामाजिको वेति। कालिदासमते सुशिक्षितो नरो दूरत एव परिचीयते। तस्य कार्यकलाप एव तच्छिक्षामभिव्यनक्ति—

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।
आगमैः सदृशारम्भः आरम्भसदृशोदयः ॥[34]

सच्छिक्षा नरं पावयति भूषयति च—

प्रभामहत्या शिक्षयेव दीप—
स्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी,
तया स पूतश्च विभूषितश्च ॥[35]

उपनिषत्सु कृताभ्यर्थनापि सच्छिक्षयैव घटते[36] ।

अतः कालिदासः स्पष्टैः शब्दैः शिक्षाया उद्देश्यद्वयं मनुते[37] ।

१. प्रबोधः – ज्ञानप्राप्तिः ।

२. विनयः—शीलसम्पन्नता ।

नरो न केवलं ज्ञानेन श्रेष्ठतामापद्यते, सुशीलतापि तस्यावश्यकमङ्गम् । विद्या चाभ्यासेनैवायाति[38] । अनभ्यासे तु सा विषमेव । आधुनिककाले नियतपाठ्यपुस्तकांशरटनेन नियतसमये च यथाकथञ्चित् परीक्षोत्तरणेन शीलन्तु दूरतस्तिष्ठतु, ज्ञानप्राप्तिरपि न संभवति । ज्ञानेन सांसारिकसुखसाधनानि वर्धन्ते । परं शीलमन्तरा लोभमात्सर्यद्वेषादयो दुर्गुणाः मानवमभिभूय सर्वत्र कलहमयं वातावरणं जनयन्ति । येन समाजो दूषितो भवति । अत एव शिक्षाशास्त्री कालिदासः शिक्षाहेतुमुद्दिशन् प्रबोधेन सह विनयमप्युदलिखत् । तदैव शिक्षा सार्थका ।

——:०:——

1. स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद् ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥
अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥
धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥
त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवित् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥
रघु० ३.२८—३ .

2. रघु० ८.६७

3. उत्तररामचरिते भवभूतिरात्रेय्याः लवकुशयोः च सहशिक्षणं पाठ्यक्रमञ्च दर्शयति । संभवतः कालिदासकालेऽपि पद्धतिरेषा प्राचलत् ।

4. रघु० १४.७७

5. गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् । रघु० ३.७०

6. शाकु० ७.२०

7. षडङ्गाः वेदाश्चत्वारो मीमांसान्वीक्षिकी तथा धर्मशास्त्रं पुराणञ्च विद्याश्चतुर्दश । अभिधानचि० २.१६७

8. शा० १.२५

9. रघु० ५.४—६

10. रघु० १४. ७५—८२

11. शान्तमिदमाश्रमपदम्—शा० १.१६

12. रघु० १४.८१

13. शा० ४.१४

14. पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना । रघु० १७.१

15. यत्क्षत्रियकुमारस्य जातकर्मादिविधानं तदस्य भगवता च्यवनेनानुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीतः ।

विक्रमो० ५.५ श्लोकानन्तरम् ।

16. रघुवंश, १४.७८

17. रघुवंशम्, १४.४०

18. रघुवंश, १.१

19. कुमारसम्भव, ७.६१

20. रघु० १०.३६

21. रघु० १५.३३

22. शा० ३.७ श्लोकानन्तरम् ।

23. रघु० ५.४

24. रघु० ५.२४

25. रघु० ५.४

26. शा० ७.३५

27. मालवि० १.१७

28. एका क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकानां धुरि प्रतिष्ठापयितव्य एव ॥

मालवि० १.१६

अपि चात्रैव हरदत्तगणदासयोर्विवादे पण्डितकौशिक्या शिक्षकगुणदोष-विषये दीयमाने निर्णये गौतमोऽपि तस्याः निर्णयमेवं समर्थयति—

उपदेशदर्शनान्निर्णय इति (१६ तम श्लोकानन्तरम्)।

स्वयं गणदास एव स्वीकरोति—छात्रपरीक्षणमेव शिक्षकस्य निकषः।

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु॥ मालवि० २, ९

29. रघु० १.८८
30. रघु० १४.४६
31. रघु० १.७९
32. रघु० १.८
33. रघु० ३.३०
34. रघु० १.१५
35. कु० सं० १.२८
36. असतो मा सद्गमय, तमसो मा ज्योतिर्गमय,
मृत्योर्मामृतं गमय। बृहदारण्यक० १.३.२८
37. सम्यगाराधिता विद्या प्रबोधविनयाविव। रघु० १०.७१
88. विद्यामभ्यसनेनेव प्रसादयितुमर्हसि। रघु० १.८८



# महाकविकालिदासस्य काव्येषु काव्यबिम्बम्

डा० रामप्रतापः, जम्मूविश्वविद्यालयः

## काव्यबिम्बस्य परिचयो लक्षणं च

अनेकविधानां वादानामस्मिन् युगे काव्यशास्त्रविषयका अनेके वादाः प्रचलिताः। एषु वादेषु बिम्बवादस्य प्राधान्यं भारतीयपाश्चात्यकाव्यशास्त्रयोरुभयोरेव मध्ये दरीदृश्यते। न केवलं साहित्यक्षेत्रे अपितु अन्यास्वपि बह्वीषु कलासु वादस्यास्य प्रभावातिशयो विलोक्यते। कविता, कथा, उपन्यासो नाटकमाधुनिक्यश्च चित्रमूर्त्तिस्थापत्याद्याः कला अस्य भासा भान्ति। आङ्गलभाषायामेष सिद्धान्तः 'इमेजिज़्म' इति नाम्ना निर्दिश्यते। हिन्दीभाषायां चायं काव्यबिम्बं बिम्बवादो रूपयोजना चेति नामभिः प्रथितः। उर्दूभाषिभिश्चैष 'इशारियत' इति नाम्ना व्यवह्रियते।

पाश्चात्यो विद्वान् ह्यूमहोदयो बिम्बस्य काव्ये आवश्यकी स्थितिरिति प्रतिपादयन्नेवमाह—काव्यस्य प्रत्येकं शब्दो वस्तुविशेषस्य याथातथ्येन निरूपणं विदधीत कस्यचिद् वस्तुनोऽपि स प्रतिबिम्बं स्यात्[1]। सी० डी० लैविसमहाभाग इममेवं लक्षयति—काव्यबिम्बं न्यूनाधिकरूपेणैवंविधं भावगर्भितं शब्दचित्रं यत्खलु कवितायां भावविशेषमावेगविशेषं वा पाठकस्यान्तःकरणे सङ्क्रामयति[2]। एवमस्य विदुषो मतेन—सामाजिकचेतसि भावविशेषसङ्क्रामकं शब्दचित्रमेव काव्यबिम्बमिति ज्ञायते। समालोचकवरेण्यः डा० नगेन्द्रोऽस्य स्वरूपमेवं प्रतिपादयति—शब्दार्थयो र्माध्यमेन प्रकटीकृता, कल्पनया विनिर्मिता भावप्रेरणामूला च मानसी छविरेव काव्यबिम्बम्[3]। भावविशेषेण प्रेरिता कविकल्पना कविहृदये मानसिकं सौन्दर्यविशेषमुत्पादयति। तस्यैव सौन्दर्यस्याभिव्यञ्जकं शब्दचित्रं ब्रिम्बमित्यस्य मतस्य निर्गलितार्थः।

डा० रामगोपालशर्मा बिम्बमित्थं व्याख्याति—यदा कश्चित् कृतिकारः कलाकारो वा किमपि वस्तु विलोकयति तदानीमसौ तस्य प्रभावेन प्रभावितः सन्ननुभूतिविशेषामनुभवति । तस्मिन् समये तन्मनसि समुत्पन्ना साऽनुभूतिर्भावात्मिका सती सुचिरं तिष्ठति । अत्र मदुक्तेन भावपदेन काव्यशास्त्रप्रोक्तो भावो न ज्ञेयोऽपितु सामाजिकचेतसि सूक्ष्मरूपेण तस्य वस्तुनः कल्पनाविशेषस्य वा याऽवस्थितिः सैवात्र ममाभिमता । यदा कस्यचिदपि वस्तुनो दृश्यस्य वा स्वमानसे परिकल्पितां भावात्मिकीं सत्तां शब्दार्थयो र्माध्यमेन वयं प्रेषयितुमभिलषामस्तदा तां यथावत्प्रहितुमप्रभवन्तः सन्तः स्वीयेष्वन्तःकरणेषु अङ्कितं रूपं छविमेव वा प्रेषयामः । तदानीं यदेव प्रेष्यते तदेवास्मद्दृष्ट्या काव्यबिम्बमिति । व्यक्तिगतानुभूत्यनुगतत्वान्नेदं वस्तुनो यथार्थरूपम्[4] । डा० शर्मणोऽस्य कथनस्येदं तात्पर्यम् यदा कविः कश्चित् कलाकारो वा वस्तुविशेषमवलोकते तदा तस्य चेतसि काचिदनुभूतिर्जायते । सा च तन्मनसि वासनात्मतया सूक्ष्मरूपेणावतिष्ठते । स्वमानसपटले संस्थितां यां छविं शब्दार्थै रेखाभिर्वा स कविः कलाकारो वा आविष्करोति सैव काव्यबिम्बम् । यदा कविः स्वीयसूक्ष्मेक्षिकया वर्ण्यवस्तूनामङ्गप्रत्यङ्गवर्णाकृतीस्तत्सम्बद्धां परिस्थितिं च सुश्लिष्टतया वर्णयति तदैषा बिम्बसृष्टिर्जायते । वस्तुतस्तु कस्यचिद् वस्तुनोऽनुभूते र्भावस्य वा मानसपटले प्रादुर्भूतं यद् भावात्मकं मूर्त्तं चित्रं तदेव काव्यबिम्बमिति । कस्यचिद् वस्तुनो विलोकनादनन्तरं हृदयपटलस्योपरि यत्तस्य भावात्मकं प्रथमं चित्रं तत् बिम्बमिति । तदेव यदा शब्दार्थयो र्माध्यमेन प्रतिबिम्बितं जायते तदा काव्यबिम्बमिति निगद्यते । एतत्खलु शब्दार्थयोर्माध्यमेन प्रस्तुतं वर्ण्यपदार्थस्य मूर्त्तीकरणरूपम् । इत्थं शब्दार्थसामर्थ्यात् पदार्थानां चित्रात्मकतया स्पष्टप्रतिभासमानत्वेन भावोत्तेजकतया च भावगर्भितं मूर्त्तीकरणमेव काव्यबिम्बत्वेनावबोधनीयम् । लौकिकासु काव्येतररचनासु वा यत् पदार्थानां वर्णनं तत्र तेषां प्रकृतेः स्वरूपस्यैव वा वर्णनं विधीयते । तत्र तु श्रोतॄणां पाठकानां वा मस्तिष्केषु तत्पदार्थस्य चित्रं निर्मितं स्यादिति तु नापेक्ष्यते । एतत्कार्यं काव्यकर्त्तुः प्रतिभान्वितया वर्णनशक्त्यैव निष्पद्यते । एवंविधानि शब्दचित्राणि कदाचिद् वस्तुवर्णनात्मकानि कदाचिच्च भावात्मकसंवेदनगर्भितानि । अनया मूर्त्तीकरणप्रक्रियया अमूर्त्तमनोभावा अपि मूर्त्तीभूयन्ते । एतन्मूर्त्तं रूपं स्वानुभूत्येकमानं कस्यचिदपि भावविशेषस्य प्रत्यक्षीकरणासम्भवात् रूपविशेषे वा परिणतेरभावात् । कस्मिंश्चिच्चित्रविशेषे चित्रितपदार्थेन सार्धं तच्चित्रकर्त्तुर्भावनाऽपि निहिता जायते

तच्चित्रं तां भावनामभिव्यनक्ति सा भावना यद्यपि न तत्र मूर्त्तरूपिणी तथापि चित्रप्रेक्षकस्तां चित्रावलोकनकाल एव स्वयमनुभवति । अनया विधया भावप्रत्यक्षीकरणमपि सम्भवति ।

अनुभूतिमाध्यमभूतानां पदार्थानां मूर्त्तीकरणं विना तैरुत्पादिता । अनुभूतिरपि नानुभवितुं शक्यते । रसानुभूतावपि विभावानामनुभावानाञ्च मूर्त्तीकरणमनिवार्यम् । कान्तोद्यानचन्द्राद्यालम्बनोद्दीपनबिभावा यावत्प्रेक्षकैर्न प्रत्यक्षीक्रियन्ते तावदसौ रसमनुभवितुमक्षमः । अत एव दृश्यकाव्यान्येव परमार्थतः काव्यानि इति मतं रुचिकरं युक्तियुक्तं च । गोशब्दोच्चारणानन्तरं यद् गोपिण्डार्थज्ञानं तदेव तच्छब्दस्य तात्पर्यम् । गौश्चलः शुक्लः डित्थः इत्युक्त्यनन्तरं गोपिण्डस्य स्वरूपज्ञानं प्रत्यक्षतया जायते । एतज्ज्ञानमपि बिम्बात्मकम् ।

यथा सर्वेषां भारतीयकाव्यसम्प्रदायानां ध्वनिसिद्धान्तेऽन्तर्भावो जायते तथैव बिम्बवादस्यापि सम्भवति । वस्तुध्वनिरलङ्कारध्वनी रसध्वनिरिति भेदत्रये काव्यस्य सर्वविधभेदा अन्तर्भवन्ति । इदानीमेकः प्रश्नो दृष्टिपथं समापतति—बिम्बध्वनयोर्मध्ये कः सम्बन्धः ? वीचीतरङ्गन्यायेनैष सिद्धान्तो व्याख्यातुं शक्यते । यथा कस्यचिच्छान्तसरोवरस्य जले समुत्पन्नः प्रथमस्तरङ्गोऽन्याननेकान् तरङ्गान् जनयति तथैव कविप्रयुक्तैः पदैः पाठकस्य मस्तिष्के प्रथमं रूपं (बिम्बं) समुत्पाद्यते । प्रथमतरङ्गादुत्पाद्यमाना इतरतरङ्गा इव प्रथमादस्माद् बिम्बाद् यान्यपराणि चित्राण्यभिव्यज्यन्ते तानि तु ध्वनिरिति व्यपदेशार्हाणि । परन्तु नायं नियमो निरपवादो यतो हि कदाचिद् बिम्बं ध्वनिना निर्मीयते कदाचिद् बिम्बनिर्माणे ध्वनेर्योगः । ध्वनिबिम्बयोर्मध्ये यः साध्यसाधनभावात्मकः सम्बन्धः स परिवर्तनशीलः । यदा बिम्बं ध्वनिं पोषयति तदा बिम्बं साधनं ध्वनिश्च साध्यमन्यथा तद्विपरीतम् ।

कस्यचिद् भावविशेषस्याभिव्यञ्जकानि बिम्बानीमानि द्विविधानि—

१. शब्दैरुपस्थापितानि शब्दबिम्बानि

२. शब्दानां ध्वनिभिरुपस्थापितानि ध्वनिबिम्बानि (ध्वनिचित्राणि) च ।

शब्दबिम्बेषु ध्वनिरिव अर्थस्य रूपं पिहितापिहितत्वेन संदृश्यते[5] । अर्थगर्भितमिदं बिम्बं कस्याश्चित् सुन्दर्याः कुज्झटिकापिहितमूर्त्तिरिव स्पष्टास्पष्टरूपमत् । शब्दध्वनिभिरुत्पन्नं ध्वनिबिम्बं सङ्गीतात्मकशब्दगर्भितं तत्र शब्दानां ध्वनिरर्थान् अनुसरति । एतादृशेषु स्थलेषु भावस्य कल्पना शब्दार्थज्ञानं विनैव सम्पद्यते ।

उपमारूपकोत्प्रेक्षादिषु सादृश्यमूलकेष्वलंकारेषु द्वे बिम्बे सम्मुखे आयात:— उपमेयबिम्बम् उपमानबिम्बं च। वस्तुत: सादृश्यप्रतीतिहेतूनाम् उपमानोपमेय-वाचकसाधारणधर्माणां मध्ये सर्वाधिकं महत्त्वम् उपमानस्यैव। उपमानचयनमेव कविप्रतिभाया: परीक्षानिकष:। उभयविधयो: शब्दबिम्बशब्दध्वनिबिम्बयोर्मध्ये प्रत्येकं चतुर्विधम् उपमानस्य चतुर्विधत्वात्। क्वचिद् अमूर्त्तप्रकृताय मूर्त्तोपमानं क्वचिच्च अमूर्त्तप्रकृतायामूर्त्तोपमानं प्रयुज्यते। एवमेव क्वचिन् मूर्त्तप्रकृतायामूर्त्तो-पमानं क्वचिच्च मूर्त्तप्रकृताय मूर्त्तोपमानं व्यवह्रियते।

## कालिदासीयकवितायां काव्यबिम्बम्

महाकविकालिदासो ध्वनिप्रधानकाव्यकारेषु मूर्धन्य इति सर्वै: स्वीक्रियते। तस्य रसभाववतीषु कृतिषु रसभावाभ्यां सार्धं ध्वनेर्मणिकाञ्चनसंयोगो दृश्यते। डा० एस० के० डे० महाभागा: कालिदासविषये अभिदधति—शेक्सपियर इव कालिदास: स्वीयमभिप्रायं व्यञ्जनयाऽभिव्यनक्ति। तस्य कृतिष्वभिधाया अल्पी-यान् प्रयोग:[6]। तदीयरचनासु सादृश्यमूलकैर् उपमारूपकाद्यलङ्कारैर्यत्र तत्र शब्दबिम्बानि समुत्पाद्यन्ते। एतादृशेषु स्थलेषु एकं बिम्बम् उपमेयस्य सञ्जातम् अपरञ्चोपमानस्य। विलक्षणैर्बिम्बविधानैस्तेनाचेतनभावाश्चेतना विहिताश्चेत-नाश्चाचेतना:। सुकवि: काव्ये जडानपि नगनदीप्रभृतिपदार्थान् स्त्रीपुरुषवच्चेतन-तया वर्णयति तथा च चेतनानानन्दसंदोहदशायाम् अचेतनवदिच्छानुरूपं स्वतन्त्र-तया निरूपयति। एतत्तथ्यमानन्दवर्धनाचार्यैर्ध्वन्यालोके प्रदर्शितम्—

> भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
> व्यवहारयति यथेष्टं सुकवि: काव्ये स्वतन्त्रतया[7] ॥

अनेन महाकविना सादृश्यमूलकेष्वलङ्कारेषु क्वचिद् अमूर्त्तोपमेयायामूर्त्तोपमानं क्वचिद् अमूर्त्तोपमेयाय मूर्त्तोपमानं क्वचिन् मूर्त्तोपमेयायामूर्त्तोपमानं क्वचिच्च मूर्त्तोपमेयाय मूर्त्तोपमानमुपनिबद्धम्। अधस्तनेषु कतिपयोदाहरणेषु एतद् द्रष्टुं शक्यते—

### अमूर्त्तोपमेयायामूर्त्तोपमानम्

> आकारसदृशप्रज्ञ: प्रज्ञया सदृशागम:।
> आगमै: सदृशारम्भ आरम्भसदृशोदय:[8] ॥

अत्र राज्ञो दिलीपस्य गुणकीर्तनम्। तस्य नृपस्याकार इव प्रज्ञाऽऽसीत्। प्रज्ञेव शास्त्रज्ञानं शास्त्रज्ञानमिव क्रियाकलाप: क्रियाकलाप इव च कार्यसाफल्यमासीत्।

मालोपमाया निदर्शनेऽस्मिन् आकारादीनि वस्तूनि उपमेयभूतानि प्रज्ञादीनि चोपमानानि। अत्रोपमानोपमेयानि सर्वाण्येव अमूर्त्तानि। आकारस्तु जातिरूपः स तु समस्तेषु अवयवेषु समवायसम्बन्धेनावतिष्ठते। आकारादीनि अमूर्त्तानि सन्त्यपि मूर्त्तानीव प्रतिभासन्ते। सर्वाणीमानि अचेतनानि सन्त्यपि चेतनवत्तया प्रतीयन्ते। अत्रैषां बिम्बानि दृक्पथमायान्ति। पूर्वमाकारस्य बिम्बमनन्तरमेव प्रज्ञादीनां बिम्बानि प्रतिफलन्ति।

### २ अमूर्त्तोपमेयाय मूर्त्तोपमानम्

राजा—[परिक्रामति। अधिकारखेदं निरूप्य] सर्वः प्रार्थितमर्थमभिगम्य सुखी सम्पद्यते जन्तुः। राज्ञां तु चरितार्थता दुःखान्तरैव।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्[९]॥

यथा शिरस उपरि लम्बमानः खड्गः कमपि आनन्दसागरे निमग्नं पुरुषं दुःखयति तथैव राज्यमपि चिन्तादिसंकुलत्वात् सुखमग्नं नृपमुद्वेजयति। अभिज्ञानशाकुन्तले राजा दुष्यन्तः स्वीयां मानसीं व्यथां प्रकटयन् कथयति—सर्वे जनास्तु कार्यसिद्धयनन्तरं सुखिनो भवन्ति किन्तु अस्मादृशा नृपजनास्तु राज्यप्राप्त्यनन्तरं दुःखभाजो भूताः। राज्यं लब्ध्वा यत्सम्मानं प्राप्यते तेन हृदि वर्तमानौत्कण्ठ्यमात्रं पूर्यते परं प्राप्तस्य राज्यस्य रक्षणाय महती चिन्ता समुद्भवति। सा तु नितरां खेदं जनयति। यथा बृहद्राजछत्रं धारयन् पुरुषस्तच्छायासुखं नानुभवति असौ तु दण्डभारादवसीदति तथैव राजाऽपि राज्योपलब्धेरनन्तरं तद्भारेणाक्रान्तः सन् सुखापेक्षया दुःखाधिक्यं लभते। प्राचीनकाले राजछत्रस्य दण्डः सुवर्णादिभिर्धातुभिर्मण्डितोऽजायत अत एव दण्डभारो वृद्धिमगच्छत्। अत्रोपमेयभूतायामूर्त्तराज्याय मूर्त्तोपमानं स्वहस्तधृतदण्डातपत्रं प्रयुक्तम्। एकं बिम्बमचेतनराज्यस्य अपरञ्चाचेतनातपत्रस्य।

### ३ मूर्त्तोपमेयाय मूर्त्तोपमानम्

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः[10]॥

अस्मिन् श्लोके स्वयंवरोद्यताया इन्दुमत्या वर्णनम् । यदेन्दुमती स्वहस्ते वरमालां गृहीत्वा एकस्य राज्ञः पुरस्ताद् गच्छति तदा तस्य राज्ञो मुखे तादृशी एव दीप्तिराविर्भवति यथा खलु सञ्चारिण्या दीपशिखायाः प्रकाशे विद्यमानस्य राजमार्गस्य भवने दृश्यते । परं यदेन्दुमती तं विहायापरं राजानमभियाति तदा पूर्वो राजा विषण्णवदनो जायते । अत्र पूर्वं दीपशिखायाः सौधतलवर्तिनोऽन्धकारस्य च काल्पनिकं चित्रं पाठकस्य मस्तिष्के आविर्भवति तदनन्तरमेव निराशाग्रस्तनृपतीनां दीप्तिमत्या इन्दुमत्याश्च द्वितीयं चित्रं समुपतिष्ठते । अत्रोपमेयभूतेन्दुमती तदनुरक्ता राजानश्चेतना भावा राजमार्गे स्थितोऽट्टस्तदुपरि निपतिता च दीपशिखाऽचेतना । चेतनाचेतनयोरियं युगपत् स्थितिर्नितरां चमत्कारजनिका । यथा वा—

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि[11] ॥

स्वकुशलमयीं प्रवृत्तिं प्रेषयन् मेघदूतस्य यक्षो मेघमभिदधाति—त्वं मदीयां विरहविधुरां भार्यामवश्यमेव विलोकयिष्यसि । सा खलु पुनर्मिलनस्य प्रतीक्षां कुर्वाणा सतीदानीं कृच्छ्रेण जीवनं धारयति । अत्र पूर्वं कविनिबद्धयक्षकल्पनानुरूपं विरहिण्या यक्षपत्न्याः काल्पनिकं चित्रं सहृदयपाठकानां हृदयपटलेऽङ्कितं जायते तदनु यक्षिणीमुखसदृशानि तत्तद् भावाभिव्यञ्जकानि विरहिणीनामन्यासां नायिकानां वदनान्यपि स्मृतिपथं कल्पनापदवीं वाऽरोहन्ति । अत्र यक्षपत्नी मूर्त्तिमदुपमेयमन्याश्च प्रोषितभर्तृका मूर्त्तान्युपमानानि ।

क्वचित् क्वचिदलंकारं विनैव महाकविना बिम्बमुपस्थापितम्—

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद् भर्त्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति[12] ॥

अत्र देवताराधने यक्षचित्रनिर्माणे संलग्ना यक्षपत्नी सारिकया सार्धं भाषमाणा संलक्ष्यते । अस्य स्थलस्य पठनेन पाठकस्य चक्षुषोः पुरस्ताद् विरहिणी यक्षिणी पञ्जरस्था सारिका चायाति । तदनु झटित्येव एवंविधानामन्यासामपि नायिकानां प्रतिबिम्बानि मनस्यङ्कितानि जायन्ते ।

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिरित्यादौ कुमारसम्भवस्य श्लोकेऽपि काल्पनिकं चित्रद्वयमुपस्थितम् । पाठकस्य नयनयोः पुरस्तादेकतः पर्वतेनावरुद्धायाः क्षोभवतीनद्यो बिम्बं समापतति अपरतश्च शिवेनावरुद्धायाः पार्वत्या बिम्बम् । अत्रोपमेयभूता पार्वती चेतनो भावो नदी चाचेतनः ।

४ मूर्त्तोपमेयायामूर्त्तोपमानम्

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः
दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्[14] ॥

मेघदूतस्यास्मिन् श्लोके यक्षो मेघमाह—हरितवेतसादस्मात् स्थानादग्रे गत्वा मार्गस्थितदिग्गजानां शुण्डादण्डान् परिहरन् त्वं मरुन्नीयमानपर्वतखण्ड इव शोभमानः सन् विस्मिताभिः सिद्धसुन्दरीभिः प्रेक्षिष्यते । अत्र पूर्वमभिधयोपमेयभूतस्य पवननुन्नशरीरधारिणो मेघस्य प्रथमं बिम्बमुपस्थितम् । तेनैव सार्धमुपमानभूतपर्वतखण्डस्य दिग्गजानाञ्च अन्यानि बिम्बानि नयनगोचरीभवन्ति । एषामेव पदानां ध्वनिभिः रसिकनिचुलप्रकटितकालिदासकाव्यकमनीयशुभ्रगुणानां दिङ्नागदर्शितकृष्णदोषाणां कालिदासकविताजन्यायाः शुभ्रकीर्त्तेश्च अमूर्त्तरूपाणि काल्पनिकबिम्बानि प्रस्तूयन्ते ।

महाकवेः कवितायां शब्दबिम्बानीव ध्वनिबिम्बान्यपि समुपलभ्यन्ते । मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्[15] इत्यत्र प्रयुक्तोऽनुप्रासो मन्दगत्या पवनेन प्रेरितं मेघं निर्दिशति । एवमेव मायूरी मदयति मार्जना मनांसि[16] इत्यत्र मायूरीमार्जनाध्वनिमनुप्रासो नादानुरूपतयाऽनुहरति । एवं महाकविकालिदासेन स्वीयकृतिषु बिम्बानि प्रस्तूयालोकसामान्यः प्रतिभाविशेषः प्रकटीकृतः येन हि तस्य गणना संस्कृतजगतः द्वित्रेषु पञ्चषेषु वा कविषु विधीयते ।

——:o:——

1. काव्यसमीक्षा : डा० विक्रमादित्यराय ( वाराणसी १९६७ ) अध्याय ३, पृष्ठ ८०
2. The Poetic image is a more or less sensuous picture in words, to some degree metaphorical ... but also charged

with releasing into the reader a special poetic emotion or passion.—The Poetic Image : C. D. Lewis, p. 22 काव्यात्मक बिम्ब (अखौरी ब्रजनन्दनप्रसाद पटना) पृ० ५६

3. काव्यबिम्ब : डा० नगेन्द्र पृ० ५

4. प्राच्य एवं पाश्चात्य काव्यशास्त्र में बिम्बसिद्धान्त : डा० रामगोपाल शर्मा पृ० २, Principles of Literary Criticism in Sanskrit. Edited by Dr. R. C. Dvivedi (Delhi 1969)

5. नान्ध्रीपयोधर इवातितरां प्रकाशो नो गूर्जरीस्तन इवातितरां निगूढः। अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः॥ काव्यप्रकाश ५, २ कामिनीकुचकलशवद् गूढं चमत्करोति इत्यत्र वामनी टीका।

6. But Kalidasa like Shakespeare suggests more than he expresses. A History of Sanskrit Literature : Dr. S. N. Dasgupta & Dr. S. K. De, Vol. I Book II Chapt. III P. 154 (1947)

7. ध्वन्यालोकः ३, ९९ कारिकाया वृत्तिभागः
8. रघुवंशम् १, १५
9. अभिज्ञानशाकुन्तलम् ५, ६
10. रघुवंशम् ६, ६७
11. मेघदूतम् १, ९
12. तत्रैव २, २५
13. कुमारसम्भवम् ५, ८५
14. मेघदूतम् १, १४
15. तत्रैव १, १०
16. मालविकाग्निमित्रम् १, २१



# कालिदासमते कर्मतत्त्वम्

डा० कौशल्या वल्ली

कर्मविधानं तु कतिपयविचारकानुसारेण प्रकृत्यां दोषमुक्तिनियमः । वस्तुतः इदं क्रियाप्रतिक्रिययोः विधिः, संसूचयन् यद् विशेषपरिस्थितिमध्ये प्रत्येकक्रियायाः अनुरूपप्रतिक्रिया वर्तते या प्रतिक्रिया यथार्थं क्रियायाः तुल्यैव। एतत्कारणेन वयम् इदं (कर्म) प्रकृत्याः आत्मसमायोगस्य तत्त्वं मन्तुं विवशाः ।

पुनर्जन्म कर्मतत्त्वस्य उपलक्ष्यम् अङ्गीकृतम्। सर्वे कर्मतत्त्वस्य दृढ़तां प्रभुत्वं च स्वीकुर्वन्ति, परं मानवः अस्य तत्त्वस्य निबन्धनानि अभिभवितुं समर्थः, अस्य अभ्यसनात् च शाश्वतमुक्तिं प्राप्तुं समर्थः। यतः, वस्तुतः कर्मसिद्धान्तस्य पाशात् मुक्तिपर्यन्तं मानवजीवनं पूर्णतां प्राप्तुं न समर्थम्। यथार्थ—सफलजीवन-यापनेच्छुकमानवस्य मोक्षप्राप्तिरेव उद्देश्यम् ।

कर्मनियमः निम्नलिखितधारणाः स्वीकरोति—

(क) भौतिकसंसारे प्रकटीभूतः जीवनस्य प्रवाहः चैतन्यं च आदिरहिते। जीवन-प्रवाहस्य प्रारम्भः कदा जातः—अयं तु कल्पनातीतप्रश्नः। येनकेनचिद्-दृष्टिकोणेन वयं तार्किकावश्यताश्यात् इदं ज्ञातुं विवशाः यद् अस्य प्रवाहस्य प्रारंभिकेतिहासः वर्तते यं विना किमपि तार्किकावबोधनं संभवं न।

(ख) आत्मा पूर्वकर्मफलस्वरूपं शरीरं धारयति। शरीरस्य गुणाः, अस्य विद्यमानतायाः कालः, शरीरेण दुःखसुखानुभवाः पूर्वकर्मफलस्वरूपाः वर्तन्ते। जीवनचेतनतयोः विभिन्नस्तरास्तु कर्माधीनाः ।

(ग) कर्मणः पृष्ठभूम्याम् अज्ञानं वा काचित् कृष्णपार्थिवशक्तिर्वा या क्रिया-शीला—इति प्रायः प्रत्ययीक्रियते ।

(घ) सुखदुःखे तु कर्मणः अनिवार्यानुषङ्गिके तद् विपाको वा ।

कर्मणः सम्पूर्णचक्रं भागत्रये विभक्तम्—

१. संचितकर्म २. प्रारब्धकर्म ३. क्रियमाण कर्म च । युगयुगेषु उपचितकर्म एव संचितकर्म—इति मन्यते । प्रारब्धकर्म तु कर्मणां स समुदायः यस्तु वर्त्तमानजीवनस्य कारणम् । वर्त्तमानशरीरेण कृतं कर्म क्रियमाणकर्म—इति कथ्यते ।

प्रसिद्धसंस्कृतकविः कालिदासः कर्मसिद्धान्तज्ञः आसीत् । आचार्यवसिष्ठमते अयोध्यायाः सूर्यवंशस्य दिलीपनृपतेः संतत्यभावः पूर्वजन्मकर्मपरिणामः आसीत् । एतत्कर्ममार्गे कामधेनुं प्रति प्रदर्शितानादरफलस्वरूपम् उत्पन्नमभवत्[1] । "त्वं मामनादरपात्रमकरोः । तद्दराडरूपं त्वं सन्तति रहितो भविष्यसि यावत्-पर्यन्तं त्वं मम शिशोः सेवां न करिष्यसि"—इति सा तं शशाप ।

कालिदासविचारे मनः जन्मान्तरसंबन्धम् अवश्यमेव जानाति[2] । यदा कर्मचक्रं चलति, निमित्तं तु किंचिदपि भवितुं समर्थम् । स्रगपि वज्रं भवति । अजनृपतेः पत्नी इन्दुमती स्ववक्षःस्थले मालापतनेनैव मृता बभूव । असहायोऽजः मरणेच्छुकः सन्नपि मरणं न याति, स्वकर्माण्येव दोषपूर्णानि मन्यते[3] ।

"दैवम्" तु कर्मणः एकः आवश्यकसिद्धान्तः । दैवं हि पुरुषार्थतः पौरुषाद वा भिन्नम् । पुरुषार्थस्तु मानवयत्नः, दैवं तु विशेषफलं देवानां क्रियाविशेषाणाम् । मूलतः इमानि फलानि पूर्वजन्मनः निजकर्मणः परिणामाः अदृष्टशक्तिरूपेण सञ्चितानि पुण्यपापरूपेण देवैः नियमतानि च परिणामतः "दैवम" इति नाम्ना प्रसिद्धानि । दैवविषये मतद्वयं प्रसिद्धम्—एकमते पूर्वजन्मनः पापपुण्यरूपफलमेव दैवम् । अपरमते दैवं तु अन्धा उच्चशक्तिः या किञ्चत्मात्रं भाग्येन विश्वासेन वा सह सम्बद्धा, पुरुषस्य पूर्वपुरुषकारेण सह कार्यकारणसंबन्धरहिता च ।

कतिपयकृतिषु वयं कर्मदैवयोः सुदृढ़वपरीत्यं पश्यामः । एकतः कर्म कर्तुः चेतनविमृश्यकारि कार्यं संसूचयति, अपरतः दैवम् उपरिष्टात् आकस्मिकसमुत्पत्तिम् अदृष्टघटनायाः अकल्पितसुखदुःखे वा सूचयति । गहनविचारविहीनाः जनाः कर्म दैवात् पृथग् मन्यन्ते । तेषां विचारे दैवम् अनिवारणीयम् । इदं तु अकस्माद् अदृष्टशक्तिरूपेण आयाति, परं मानवाधिकारायत्तं न । प्रायेण जनाः कर्म आत्मशक्त्या अभिव्यक्ति मन्यन्ते यद् दैवाभिक्रमणसमये वा अदृष्टशक्त्याः

कर्मसमये वा स्वसत्तां दाढ़र्येण स्वीकरोति। अदृष्टसिद्धान्तरचनासमये परवर्ती-दर्शनसाहित्येन कर्मसिद्धान्तविवादविषये सावधानतया विषयाध्ययनं कृतं, दैव-पुरुषार्थयोः मध्ये संघर्षोऽपि समाहितः। एतद् दृष्टयनुसारेण "कर्म" "दृष्टकर्म" इति मन्यते अथवा मानसिकपृष्ठभूम्यां संस्कारवशतः वर्त्तमाने प्रत्यक्षकर्मरूपेण स्वीक्रियते, दैवञ्च पूर्वकर्मरूपेण अदृष्टकर्मरूपेण।

इन्दुमतीमृत्योः अवसरे अजः कथयति—यदा पुष्पाणि अपि जीवनं हर्तुं शक्नुवन्ति तदा दैवं स्वेच्छया कञ्चिदपि प्रहरति[4]। अजः स्वभाग्यं भर्त्सयति यद् विधाता लताम् अदहत् न तु वृक्षं, पुष्पमपि वज्रीभूतम्[5]।

पापपुण्यस्वरूपस्वकर्मवर्जं मानवेन सह परलोकयात्रायां न किञ्चदपि गच्छति, इति तत्कालीनजनाः विश्वन्ति स्म। अतः मरणसमये मानवेन सह स्वकर्म एव गच्छति—इदं तु कालिदासेन स्पष्टमेव कथितं रघुवंशे[6]। स्वपत्नी-मृत्युसमये अतितरां पश्चातापं कृत्वा, अजः वसिष्ठऋषिणा स्वसंदेशेन आश्वसितः यद् रुदता अजेन इन्दुमती न लभ्यते, यतः, मरणान्तरं मानवः स्वकर्मनुरूपं गम्य-स्थानं गच्छति।

यथार्थतः इन्दुमती पूर्वजन्मनि सुराङ्गना हरिणी आसीत्। सा इन्द्रेण मुनेः तृणन्दिोः तपः नाशयितुं प्रेरिता। तपसः विघ्नेन क्रुद्धः ऋषिः तां—"भूलोके मानुषी स्त्री भव"—इति शशाप। सा ऋषिम् अवदत्—'अहं पराधीना सती स्वाम्यादेशात् भवतां पथि विघ्नरूपा प्रमाणिता, इति कृतं मम कर्म क्षम्यताम्। शरणागतास्मि'। ऋषिः प्रत्यवदत्— "तव शापः दिव्यपुष्पदर्शनावधिः भविष्यति।" सैव हरिणी कैशिकराजवंशे उत्पन्ना आसीत् स्वर्गाच्च्युतं सुर-पुष्पम् उपलभ्य इन्दुमती मानवदेहं त्यक्त्वा देवलोकम् जगाम[7]।

अज्ञानकृतं कर्म तु ज्ञानाग्निना दह्यते[8]—इति कालिदासेन स्पष्टं कथितम्। लक्ष्मणेन यदा सीता वने त्यक्ता तदा सा इमां घटनां स्वपूर्वकर्मफलम् अमन्यत। सीता कर्मविपाकस्य महत्त्वं जानाति स्म[9]। कर्मसिद्धान्तानुसारेण कर्त्तव्यपरायण-मानवः सावधानो भूत्वा जीवनसंघर्षे सफलो भवति अन्यथा जीवः प्रियजनविरही भवति—कालिदासेन मेघदूते स्पष्टमेव उक्तम्[10]।

कुमारसम्भवे[11] धर्मस्य परिभाषा तु कर्मबन्धच्छेदनम्। धर्मस्तु अत्र प्रसिद्धार्थतः भिन्नरूपेण प्रयुक्तः। जन्ममरणचक्रात् मुक्ति प्राप्तुं कर्मबन्धनस्य नाशनम् आवश्यकम्। कर्म अर्थकामाभ्यां भिन्नम्। ब्रह्मचारीरूपेण शिवः

पार्वतीं कथयति—"भवत्याः दृढ़विचारं दृष्ट्वा अहं विश्वसिमि यद् धर्मार्थकामेषु धर्म एव श्रेष्ठः, तेन भवत्या अर्थकामविरतमनः धर्मप्रवणं कृतम्[12] ।"

अभिज्ञानशाकुन्तले[13] कर्मविषयै कालिदासस्य रुचिकरवर्णनम् उपलभ्यते। स्वप्रियतमदुष्यन्तध्यानलीना शकुन्तला स्वद्वारागतं दुर्वाससं ऋषिं न पश्यति। अपमानितः ऋषिः क्रुद्धो भूत्वा शकुन्तलां शपति—'यस्य स्मरणे मग्ना भूत्वा त्वं द्वारागतं मां न जानासि, सः त्वां विस्मरिष्यति तवानुरोधेऽपि, यथोन्मत्तः स्वभूतकालं विस्मरति' ।

इत्थं, शकुन्तलाया असावधानताफलस्वरूपेण सा स्वजीवने अत्यधिकं दुःखमनुभवति। भाग्यविडम्बना इयं यत् सा तेनैव दुष्यन्तेन अपमानिता यः एकदा शकुन्तलां स्वकीयां कर्त्तुमत्याकुल आसीत् ।

उपलब्धमाङ्गुलीयकं यदा दुष्यन्ताय दीयते, सः तदैव शकुन्तलां स्मरति, तां प्रति स्वाचरणं निन्दति। सः कथयति—'न जानामि यत् शकुन्तलया सह मम मिलनम् आसीत् स्वप्नोभ्रान्तिरथवाऽपूर्वजन्मकृतपुण्यकर्मणः फलं यस्य भोगकालः समाप्तः। अत्र तु दुष्यन्तस्य विश्वासः यत्तस्य शकुन्तलया सह मिलनं स्वशुभकर्मणः फलम्[14] ।

यदा राजादुष्यन्तः अङ्गुलीयस्य कथां विदूषकं प्रति कथयति, तदा सानुमती ब्रवीति—"विधिना विसंवादितः"[15] ।

आङ्गुलीयके प्राप्ते, राजा दुष्यन्तः तिरस्कृतां शकुन्तलां स्मृत्वा अत्याकुलो भवति, विदूषकं कथयति च—त्वमेव शकुन्तलया सह मम संबन्धं न स्मारितवान् । अन्यकारणमध्ये विदूषको भाग्यं निन्दति, कथयति च—"भवितव्यता खलु बलवती[16] ।"

सत्त्वरजस्तमांसि शुभाशुभकार्यं कर्तुं मानवं प्रेरयन्ति। शकुन्तलादुष्यन्तयोः पुनर्मिलने, दुष्यन्तः तिरस्कृतां शकुन्तलां प्रति क्षमायाचनां करोति। तत्काले अज्ञानान्धकारेण तस्य मनः आवृतमासीत्। शुभकार्यकरणसमयेऽपि तमःप्रधान व्यक्तिः एतादृग्मनोवृत्तियुक्तो भवति[17] । अस्योत्तरे शकुन्तला दुष्यन्ताय दोषं न ददाति परं पूर्वजन्मनि कृताय स्वाशुभकार्याय। परिणामतः करुणाशीलदुष्यन्तः स्वजीवनकठिनसमये कठोरो भवति[18] ,

इत्थं कालिदासः स्पष्टीकरोति यत् कर्म फलमाप्नोति कालश्च, यस्मिन् फलं प्रकटं भवति, विपाकांशेन अनुमीयते। एष सर्वः कर्मविपाकः।

निष्कर्षतः, कालिदासः पारम्परीयकर्मणि विश्वसिति स्म तत्सत्ये तस्य दृढ़विश्वास आसीत्। रघुवंशेऽजविलापः हृदये सुनिष्ठितं करोति यदात्मनोगतिर्मरणानन्तरं कर्मभेदकारणाद् वर्तते। मानवः कर्माधारे जन्ममरणचक्रे भ्रमणं करोति। आत्मनो बन्धनं कर्मवशाद् नित्यबन्धनं वर्तते। इदं तु धर्मज्ञानादिभिः निवार्यते।

---

1. रघुवंशम् १.१७—

अवजानासि मां यस्मादतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥

2. रघुवंशम्, ७.१५ ......... मनो हि जन्मान्तरसंगतिज्ञम्॥

3. रघुवंशम्, ८.५०—

दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना।
सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम्॥

4. रघु०, ८.४४—

कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुंयदि।
न भविष्यति हन्तसाधनं किमिवान्यत्प्रहरिष्यतो विधेः॥

5. रघुवंशम्, ८.४७—

अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता॥

6. रघु०, ८.८५—

रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते।
परलोकजुषां त्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्॥

7. रघु०, ८.७१—८२—

चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा।
प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम्॥
सः तपः प्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम्।
अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि॥
भगवन्परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे।
इति चोपनतां क्षितिस्पृशं कृतवानासुरपुष्प दर्शनात्॥

अथकैशिकवंशसम्भवा तवभूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ।।

8. रघुवंशम्, ८.२०—इतरो दहने त्वकर्मणां विवृते ज्ञानमयेन वह्निना ।
9. रघु०, १४.६२—ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ।
10. मेघदूतम् —पूर्वमेघः १०

कश्चित्कान्ता विरहगुरुणा स्वाधिकारात्प्रमत्तः ।
शापेनास्तंगमितमहिमां वर्षभोग्येण भर्तुः ।।

11. कुमारसम्भवम्, २.५१ कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ।
12. कुमारसम्भवम् ५.३८—

अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भामिनि ।
त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेवते ।।

13. शाकुन्तलम्, ४.१—आः अतिथिपरिभाविनि ।

विचिन्तयन्ती यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्कथां प्रमत्तः प्रथमं कृतामिव ।।

14. शाकुन्तलम्, ६.१०............तावत्फलमेव पुण्यम् ।
15. शाकुन्तलम्, ६.१२............"विधिना विसंवादितः ।"
16. शाकुन्तलम्, ६.९......अथवा भवितव्यता खलु बलवती ।
17. शाकुन्तलम ७.२४—

..............प्रबलतमसामेवं प्रायाः शुभेषु हि वृत्तयः ।

18. ७.२४—.....................

नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः ।



# मालविका

## मोनो लॉग—एकान्त आत्मनिवेदन

श्री रामनाथ शास्त्री (जम्मू विश्वविद्यालय)

संस्कृत का साहित्य-जगत् मुझ से सुपरिचित है। शताब्दियों पूर्व कवि-कुल गुरु कालिदास की लेखिनी ने मुझे जन्म दिया था। उन्हीं दिनों कवि ने, अपने संरक्षक के महलों में, अपनी इस नाटकीय रचना को रंगमंच पर साकार करने की अनुमति दी। मैं शब्दों की सूक्ष्म सृष्टि से बाहिर निकल कर सदेह हो उठी। कला के मर्मज्ञ मनीषियों ने मेरा वह प्रदर्शन देखा। दर्शकों का कौतूहल तरंगित हो उठा। "कालिदास के पहले नाटक की नायिका स्वर्ग की अप्सरा, उर्वशी थी—इस दूसरे नाटक की नायिका 'मानवी' होकर भी रूप-कला में किसी अप्सरा से कम नहीं है"। किसी ने कहा था। दूसरे ने समर्थन किया था—"इसी लिए तो कविकुल-गुरु ने इस नाटक के नामकरण में इसका महत्त्व दर्शाया है। 'विक्रमोर्वशीयम्' में उर्वशी उत्तरार्द्ध में थी लेकिन 'मालविकाग्निमित्रम्' में नायिका को मूर्धन्य स्थान दिया गया है।" आज सदियों बाद भी, अपनी देह पर उभर आई वह सिहरन मुझे याद है। तरुण कला-विदों ने एक स्वर से स्वीकार किया था कि—"मालविका इस नाटक का रुचि-केन्द्र है।" एक प्रौढ़ दर्शक बोल उठे थे : "इस कलाकृति की उपलब्धि 'मालविका' है।"

मेरा अहं फूला न समाया। लेकिन दूसरे ही क्षण एक वृद्ध आचार्य ने असन्तोष व्यक्त किया—"कालिदास अपने नाटकों के नाम रखना नहीं जानते। नायक-नायिका के युगल नाम को नाटक के शीर्षक में रख देना! इसमें भला क्या नाटकीयता हुई? नाटक में पात्र प्रधान नहीं होते—प्रधान होता है वह केन्द्रीय भाव जिसे इन पात्रों के माध्यम से व्यक्त किया जाता है।"

मेरा अहं मुरझा गया। बात सही थी। ऐसे शीर्षक से नाटकीय कौतूहल को ठेस तो पहुंचती ही है। नाटक को देखने या पढ़ने वाला प्रबुद्ध दर्शक-पाठक, एक कोमल कौतूहल, एक मसृण जिज्ञासा रखता है– उसका यह कौतूहल और जिज्ञासा अन्त तक बने रहें—इसी में कलाकृति की सार्थकता है। मैंने गत शताब्दियों में इस नाटक की बहुविध चर्चा सुनी है। इसे कई बार मंच पर खेला गया, इसे दूसरी भाषाओं में उतार कर पढ़ा गया। लेकिन आज तक मेरा यह विचार बदला नहीं कि मेरे ज़ीवन से जुड़े हुए इस नाटक की रचना करते समय, कालिदास को लोक-प्रियता अवश्य मिली थी, लेकिन वे अभी "कविकुल-गुरु" नहीं बने थे। उनके मन में अपनी कला के प्रति वह दृढ़ आस्था नहीं उपजी थी जिसका स्पष्ट आभास उनकी बाद की प्रौढ़ रचनाओं में लक्षित होता है।

इस नाटक की प्रस्तावना में ही कालिदास की यह झिझक स्पष्ट हो जाती है, जब सूत्रधार का आदेश सुन कर उनके सहयोगी पारिपार्श्विक ने अपने मन की नहीं, तरुण नाटककार, कालिदास के मन की झिझक प्रकट करते हुए कहा था :

"प्रथित-यशसां भास - सौमिल्ल - कविपुत्रादीनां
प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य
क्रियायां कथं बहुमानः ?"

अर्थात् जगत्-प्रसिद्ध नाटककारों, भास - सौमिल - कविपुत्र आदि की प्रशस्त रचनाओं को छोड़ कर इस नए कवि कालिदास की रचना को (आज के प्रदर्शन के लिए) क्यों चुना गया है ?"

कालिदास उस समय तरुण थे। उनकी झिझक स्वाभाविक ही थी। लेकिन इस झिझक में भी उनके मनोबल की झलक बड़ी स्पष्ट है। कीर्ति के शिखर पर प्रतिष्ठित उन प्रशस्त नाटककारों के लिए श्रद्धा रखते हुए भी, उन्हें अपनी रचना के बारे में किसी तरह का हीन-भाव नहीं है। इसी लिए उनके मुंह से उस समय जो मार्मिक बात निकली थी वह 'लोकोक्ति' बन कर अजर हो गई। उन्होंने सूत्रधार के द्वारा, पारिपार्श्विक की आशंका का समाधान करते हुए कहा था :

"पुराणमित्येव न साधु सर्वं,
न चापि काव्यं नवमित्यवद्यम् ॥"

अर्थात् पुरानी होने से ही कोई वस्तु अच्छी नहीं हो जाती और हर 'नई' वस्तु दोष-पूर्ण नहीं होती।

बात कहने का यह पैन्ना ढंग कालिदास का अपना था। इस बात में कोई दूसरा कलाकार उनके सन्मुख नहीं टिक पाता। कालिदास से मुझे लाख शिकवा—गिला हो, लेकिन उनकी लेखिनी के इन चमत्कारों पर मुग्ध हुए बिना नहीं रहा जाता।

मैं, बहक गई हूं। मैं इस नाटक के नाम की चर्चा कर रही थी। कुछ आलोचकों को नाटक का यह नाम पसन्द नहीं आया। कइयों ने इस नाम को सार्थक समझा और इसमें उन्होंने मेरे प्रति कवि के पक्षपात की बात कही। वैसे मैं समझती हूँ कि कवि ने अपने पहले नाटक के नामकरण में जो भूल की थी—इस दूसरे नाटक के नामकरण में उन्होंने उसी को सुधारने का यत्न किया है। जब 'सीताराम' और 'राधाकृष्ण' जैसे अलौकिक युगलों में भी नायक उत्तरार्द्ध बने हुए हैं तो इस नाटक के नामकरण में अर्थात् 'मालविकाग्निमित्र' में मुझे पहले रखने में कवि ने मेरे प्रति कोई विशेष पक्षपात नहीं दिखाया है।

वैसे मेरे प्रति पक्षपात दिखाने की कोई मजबूरी भी कवि-कुल-गुरु को नहीं थी, क्योंकि मैं तो उन्हीं की कल्पना-शक्ति की सृष्टि हूँ, उनकी ही जादूई दृष्टि से जन्म लेने वाली 'नारी-मूर्ति' हूं। मुझे तो उन्हीं के इशारों पर नाचना था; उनकी कल्पना-डोरी से बन्धी 'पुत्तलिका' की तरह, उन्हीं के संकेतों का आदेश मान कर चलना था।

क्यों, क्या इसमें मैंने किसी तरह की अतिशयोक्ति से काम लिया है? किसी ऐतिहासिक पात्र के साथ कोई भी कलाकार मनमाना स्वच्छन्द व्यवहार नहीं कर सकता। स्वच्छन्दता का खेल खेलने के लिए ही तो कलाकार अपनी कल्पना से प्रसूत पात्रों को सामने लाता है। कुछ लोगों को शायद मेरी यह स्वीकारोक्ति अनुचित लगी होगी कि मैं कवि-कुल-गुरु की 'कल्पना की उपज' हूँ, उन्हीं के इशारों पर नाचने वाली 'पुतली' जैसी हूँ। मेरी इस बात का यथार्थ परखने के लिए, उत्सुक लोगों को कालिदास की यह रचना पढ़नी चाहिए। उस का कहीं नाटकीय प्रदर्शन हो तो उसे देखना चाहिए। मुझे विश्वास है कि सहृदय सामाजिक के मन में मेरे लिए करुणा की भावना उपजे बिना नहीं रहेगी। कुछ चंचल प्रकृति के पाठकों-दर्शकों को मेरा रूप चकित-विस्मित भी करेगा, मेरी

कला पर वे मुग्ध होंगे, और कुछ भाग्यवादी सरल भोले व्यक्ति मेरे भाग्य की सराहना भी करेंगे कि मैं एक यशस्वी सामन्त की अर्द्धाङ्गिनी बन सकी। मैं जानती हूँ कि संसार, इन पर्दों में छिपी मानव-मन की वेदना को पहचान ही कब सका है ? मेरी वेदना तो मैं ही जानती हूँ। मुझे कविकुल-गुरु के प्रति अनेक शिकवे-गिले हैं। सबसे बड़ा तो यही है कि उन्होंने मुझे सारे नाटक में कहीं भी अपने तौर पर सोचने की, अपना जीवन-पथ चुनने की, इतने विशाल धरातल पर अपनी रुचि के विकल्प की ओर संकेत करने की कोई सुविधा नहीं दी, कोई अवसर नहीं दिया।

घटनाओं के झंझावात में फंसे सूखे पत्ते के समान मैं भी विवशता के शून्य में भटकी हूं। उसे पढ़ कर भी क्या कोई सहृदय पाठक मुझे राजरानी बनने पर मुबारकबाद देगा ? मैं स्वयं भी जब दुर्घटनाओं के इस वात्याचक्र की बात सोचती हूँ तो कालिदास की कल्पना के कच्चेपन पर मुझे भी बरबस हंसी आ जाती है।

विदिशा के शासक—मेरे होने वाले प्रेमी-पति महाराज अग्निमित्र का विदर्भ के राजा से कोई राजनीतिक वैर-विरोध चल रहा था। विदर्भ के राजा ने कुमार माधवसेन को एक संघर्ष में बन्दी बना लिया जब कि वह अपनी बहन को महाराज अग्निमित्र से ब्याहने के लिए उनकी राजधानी की ओर आ रहा था। इस धर-पकड़ में माधवसेन तो बन्दी हो गया लेकिन उसकी बहन का क्या हुआ—कुछ पता नहीं चला। स्वाभाविक था कि महाराज अग्निमित्र विदर्भ के राजा पर कुपित होते जिसने उनके विवाह जैसे कोमल सम्बन्ध में बाधा पैदा की और उनके होने वाले साले को बन्दी बना लेने की ढिठाई की।

माधवसेन की वह अभागिन बहन 'मैं' ही थी। ऐसे भयानक संघर्ष में खो जाने पर भी मैं वस्तुतः खोई नहीं, क्योंकि मैं कवि-कुल-गुरु की लेखिनी की सन्तान थी, मेरा कोई स्वतन्त्र अस्तित्व नहीं था।

जिस राजा के साथ ब्याहने के लिए मेरा भाई मुझे ले जा रहा था, उस की दो विवाहिता रानियां पहले भी थीं। एक थी श्रीमती धारिणी—महाराज अग्निमित्र की पटरानी और दूसरी थी सुश्री इरावती। मुझे विदिशा के राज-प्रासाद में महाराज की 'तीसरी' रानी बनने का सौभाग्य(?) मिलने वाला था, जब विदर्भ के मूढ़ राजा ने यह बाधा खड़ी की।

इस अन्धड़ में खोकर भी मैं कहीं खो नहीं सकती थी क्योंकि यदि मैं खोकर किन्हीं अपरिचत अज्ञात लोगों के हाथों में चली जाती तो फिर मैं विदिशा के महलों में रानी पद पाने के योग्य कैसे रहती ? इसलिए कवि-कुल-गुरु की कल्पना ने मुझे, पिंजरे की बन्दिनी मैना के समान अज्ञात रूप से उसी राजा के महल में पहुंचा दिया ।

मैं कई बार अपने आपसे पूछती हूं—कहो मालविका, यह कैसी विडम्बना रही !

महारानी धारिणी का एक भाई, महाराज अग्निमित्र का सीमान्त दुर्गपाल था । दुर्गपाल शायद इस लिए था, क्योंकि महारानी का भाई था । मैं इस वात्याचक्र में जैसे तैसे उसके हाथ जा लगी और उसने 'शिल्पाधिकारे योग्या इयं' "अर्थात् नाचने-गाने की शिक्षा लिए अत्यन्त उपयुक्त है"—इस प्रमाण-पत्र के साथ मुझे अपनी बहन महारानी धारिणी के पास 'उपहार' बना कर भेज दिया । हां हां, 'उपहार' बना कर ही तो भेजा था । कवि-कुल-गुरु ने भी इस बारे में किसी तरह का दुराव-छिपाव नहीं किया । उन्होंने साफ लिखा है—"भगिन्या देव्या उपायनं प्रेषिता"—उपायन अर्थात् भेंट - उपहार बना कर भेज दिया । और इस तरह मैं महारानी धारिणी के दासी-मंडल में शामिल हो गई । भाई-बहन दोनों गुणज्ञ थे । महारानी ने मुझे उस दासता में—मेरे कहने का मतलब है महल की दासियों के उपेक्षा-भरे जीवन के इस रेले में खो जाने से बचा लिया । मैं उनके पति की प्रेमिका जो बनने वाली थी । इसी लिए मुझे इस असाधारण पद के योग्य बनाने के लिए नृत्य-कला की शिक्षा दी जाने लगी । मेरा सौभाग्य था कि इस शिल्प-शिक्षा के लिए मुझे आचार्य गणदास जैसे गुरुवर्य का आश्रय मिला । सच ही गणदास कला के सागर थे । उन्होंने मेरे अंगों में सोई हुई कोमल कला को जगा दिया । और इस महान् आचार्य का भोलापन देखिये । एक दिन कहने लगे—मुझ से नहीं, मेरी सखी बकुलावलिका से बोले :

"भद्रे ! इस मालविका के कारण मेरा भी नाम हो जाएगा ।"

बकुलावलिका ने जब मेरे गले से लिपट कर मुझे गुरु जी की यह बात सुनाई तो पहली बार मेरी आँखों में स्वाभिमान के आंसू छलक आए । गुरुदेव ने सखी को कहा था :

"सिखाने वाले की कला, अच्छे शिष्य के पास पहुंच कर
उसी प्रकार सार्थक हो जाती हैं, जैसे कि बादल की कोई
बूंद सीप के मुंह में पड़ कर मोती बन जाती है।"

लेकिन मेरी यह गौरव-भावना भी कितनी थोथी थी! मैंने कला सीखते हुए यह कब सोचा था कि यह भी उस प्रतिभाशाली कवि कालिदास की कल्पना की एक सुनिश्चित नाटकीय योजना का ही अंग है। मुझे जीवन में नर्तकी तो बनना नहीं था। कला की यह साधना महाराज अग्निमित्र के सन्मुख मेरे अंग-प्रत्यंग की रूप-बनावट दिखाने का एक बहाना-मात्र थी। कैसा षड्यन्त्र रचा गया था वह! दो सरल भोले आचार्यों को कैसे बौखला दिया था उस चापलूस विदूषक माधव ने, कि तू-तू मैं-मैं तक की नौबत आ गई थी। मेरे कानों में, आज भी उन दोनों सरल आचार्यों की आपसी कलह के वे आक्षेप गूंजते हैं। दोनों महाराज के सामने आने में भी कैसे झिझक रहे थे। सामने आने पर महाराज ने कैसे बनावटी भोलेपन के साथ उनसे पूछा था:

"कहिए, यह तो शिष्यों को शिक्षा देने का समय है, इस समय आप दोनों आचार्य एक साथ यहां कैसे?"

कला के सागर मेरे गुरु आचार्य गणदास ने क्रोध से कांपते हुए कहा था:

"सुनिये देव, मैंने बड़े योग्य गुरु से विद्या सीखी है और इतने दिनों से शिष्यों को नृत्य-कला की शिक्षा दे रहा हूँ। लेकिन आज इन हरदत्त जी ने, एक बड़े राजपुरुष के सामने डींग हांकी कि गणदास तो मेरे पैरों की धूल के बराबर भी नहीं।"

महाराज ने अपनी मुस्कराहट को छिपाते हुए आश्चर्य और सहानुभूति का भाव दिखाते हुए हरदत्त की ओर देखा।

आचार्य हरदत्त बोले:

"देव, इन्होंने ही पहले परोक्ष में मेरी निन्दा की। इन्होंने कहा कि हमारे और हरदत्त में तो समुद्र और छोटे तालाब का सा अन्तर है।" अब आप इनके और मेरे शास्त्र-ज्ञान की और शिष्यों को सिखाने की कुशलता की परीक्षा लेकर निर्णय करें कि हम दोनों में कौन बड़ा है।"

यह समस्त षड्यंत्र मुझे महाराज के सम्मुख प्रस्तुत करने के लिए था। गणदास आयु में बड़े थे, इसलिए उन्हें अपनी कला शिक्षा का प्रदर्शन करने का अवसर पहले दिया गया। और साथ ही यह आदेश भी कि :

'सर्वाङ्ग-सौष्ठवाभिव्यक्तये विरल-नेपथ्ययोः पात्रयोः प्रवेशोऽस्तु"

अर्थात् आचार्य लोग अपने शिष्यों को रंगमंच पर ऐसी झीनी, पारदर्शी वेशभूषा में लाएं जिससे उनके अंग-प्रत्यंग के कला-सौष्ठव को जांचने-परखने में बाधा न हो।

महाराज अग्निमित्र मेरे नृत्य के दर्पण में मेरा दैहिक सौन्दर्य देखते रहे। महारानी धारिणी भी वहीं थीं और वह परिव्राजिका—वह सन्यासिनी भी। विदूषक और दोनों आचार्य भी विद्यमान थे। महाराणी धारिणी सब कुछ समझ रही थीं, लेकिन कहें क्या ? जो कुछ उन्होंने कहना था वह आचार्यों में झगड़ा होता देख कर ही उन्होंने कह दिया था।

"महाराज, यदि राज-कार्य में भी आप इतनी ही कुशलता से काम लेते तो कितना अच्छा होता !"

इस नृत्य-प्रदर्शन से महाराज के मन में मेरे लिए स्नेह का 'बीज' अंकुरित हुआ और विदिशा राज्य के वह कर्णधार, समस्त राजकाज से विमुख होकर मेरे स्नेह में इस प्रकार कातर हो उठे कि अपने मित्र विदूषक से उन्होंने स्वीकार किया कि :

सर्वान्तःपुर वनिता-व्यापार-प्रतिनिवृत्त-हृदयस्य।
सा वामलोचना मे स्नेहस्यैकायनी भूता॥

अर्थात्—वह तिरछी चितवन वाली (मालविका) इस हृदय में इस प्रकार आ बसी है कि अपने रनिवास की रानियों से मेरा मन एकदम उचाट हो गया है।

उस समय मैं उस महल में महारानी धारिणी की दासियों में से एक थी। यह दूसरी बात है कि मेरे रूप-गुण के कारण उनकी मुझ पर विशेष कृपा थी और नृत्यकला में प्रवीणता के कारण मुझे दासियों से थोड़ा ऊपर समझा जाता था। लेकिन इस स्थिति में भी एक सामन्त की, मेरे प्रति यह स्नेह-कातरता कितनी सहज होगी और कितनी नाटकीय यह सहृदयों के लिए जानना कठिन नहीं।

मेरे साथ सम्बद्ध यह नाटक लिखते समय, मुझे लगता है कि कालिदास की लेखिनी में पैनापन तो झलकने लगा था लेकिन घटनाओं के सहज-स्वाभाविक विकास को पकड़ने की क्षमता अभी उतनी प्रौढ़ नहीं हो पाई थी। वह समस्त घटना-चक्र, जिसके कारण मैं, विदिशा की पटरानी की दासियों में आ मिली थी, बिल्कुल अस्वाभाविक है। इससे भी अस्वाभाविक है मेरे भाई माधवसेन के मंत्री की विधवा बहन परिव्राजिका का भी उस महल में आजाना। मुझे लगता है कि कालिदास भी विवश थे। उस समय की सामाजिक आस्थाओं के सम्मुख वे भी असमर्थ थे। नारी उस समय, जिस सामाजिक तिरस्कार में जीने को बाध्य थी, कवि उस तिरस्कार की तमिस्रा को दूर करने में असहाय थे। मुझे तो यही सोच कर दुःख होता है कि भारतीय साहित्य-संसार के भावी कवि-कुल-गुरु भी इतने विवश थे !

मैं महाराज अग्निमित्र की वाग्दत्ता थी, मंगेतर थी। हां मंगेतर ही कहना चाहिए। यह रिश्ता बिल्कुल पक्का हो चुका था। लेकिन कालिदास को तो एक नाटक रचना था। इस लिए समस्त विडम्बना मुझे सहनी पड़ी। इसी लिए मेरे होंठ भी सी डाले गए कि मैं इस 'यथार्थ' को कह न पाऊं और अपने सुनिश्चित पति के महलों में ही दासी और नर्तकी के रूप में एक नए स्नेह-नाटक की नायिका बन कर यह नई भूमिका निभाऊं ! इसे कहते हैं तिल का ताड़ बनाना ! परिव्राजिका बेचारी जो मेरे भाई के बन्दी हो जाने पर तथा मंत्री सुमति के मर जाने पर मेरी अभिभाविका थीं, अपना वास्तविक रूप और परिचय छिपाए इस नाटक में नायक की सहायिका की भूमिका निभाती रहीं।

मेरे जीवन के साथ यह कैसा खिलवाड़ किया मेरे भाग्य - विधाता ने, जिन्हें आज संसार, उनकी कला-साधना के लिए पूजता है ? मैं कई बार सोचती हूँ कि मैं तो उसी कवि-कुल-गुरु की कल्पना की सन्तान हूँ, उन्हीं के हाथों बना-गढ़ा खिलौना हूं, फिर मुझे यह असन्तोष क्यों है ? यह खीज क्यों है ? यह शिकवा-शिकायत क्यों है ? लेकिन क्या सचमुच मुझे कुछ भी सोचने का अधिकार नहीं है ? मुझे इसी लिए साकार किया गया था कि मैं किसी नाटक-कार के कथानक का एक जड़ पात्र बनी रहूं और यह अनुभूति मन में न लाऊं कि मैं भी मानवी हूं, मैं भी प्राणवान् हूँ, मुझे हृदय के साथ-साथ, सोचने की शक्ति रखने वाला मस्तिष्क भी दिया गया है, सौ प्रकार के तर्क-वितर्क करने वाला जिज्ञासा-पूर्ण मन भी मिला है।

